Oriental Research Institute Series No: 202

# गुरुशिष्यसंवादः

## अप्पयशिवाचार्यविरचितः

General Editor
Prof. Dr. H.P. Devaki

संपादकः
एस्. जगन्नाथः



Oriental Research Institute
University of Mysore
Kautilya Circle, Behind Yuvaraja's College
Mysore - 570005

Oriental Research Institute series No: 202




# गुरुशिष्यसंवादः

## अप्पयशिवाचार्यविरचितः

**General Editor:**
**Prof. Dr. H.P.Devaki**

संपादकः
एस्.जगन्नाथः







**Oriental Research Institute**
University of Mysore
Kautilya Circle, Behind Yuvaraja's College
Mysore-570005
**2013**

*GURUŚIṢYASAMVĀDA* , a work on *Anubhavādvaita*, authored by Appayaśivācārya in the style of dialogue between *Guru* and *Śiṣya* which summarizes the theories established by the author in more than one hundred Vedāntic works authored by himself; First Edition : 2013; pp. viii+62+268: Price : Rs. 180/-

Edited by : S.Jagannatha.



Price: Rs. 180/-

*Published by*

**Prof. Dr. H.P. Devaki**

Director

Oriental Research Institute

University of Mysore, Kautilya circle

Behind Yuvaraja's college

Mysore-570005

*Printed at*

**Sri S. Anand**

Director

University Printing Press

Manasagangotri

Mysore - 570 006

# Foreword

The aim of publication of the present work *Guruśiṣyasaṁvāda* ed. by Sri S.Jagannatha is to bring to light the Vedāntic ideas of Post Śaṅkara period documented in Neo-Upaniṣads. Appayaśivācārya, author of this work, flourished in 18th century at Tamiḷunāḍu belongs to the lineage of the famous Appayyadīkṣita who was a versatile writer of sound scholarship in all the branches of Sanskrit literature. About 100 philosophical treatises written by Appayaśivācārya are preserved in Karṇāṭaka and Tamiḷunāḍu. Unfortunately, most of his works are remained still in manuscript form, without any recognition from the scholars. Now the credit of editing of the work *Guruśiṣya saṁvāda* goes to Sri S.Jagannatha, a scholar of ORI, Mysore. This is the serial no. 202 among the publications of this century old institute of Mysore University.

The edition of *Guruśiṣyasaṁvāda* is based on the paper manuscript written in Malayāḷam script. For collating purpose the editor could not go

through another manuscript written in Grantha script as it is in dilapidated condition. The introductory note on the date and works of Appayaśivācārya furnished by the author is really informative. I am confident that this book will be well received by all the traditional scholars, especially lovers of *Advaita Vedanta*. I hope the same editor will do the commendable job by editing other important works of this champion of *Anubhavādvaita*.

*Guruśiṣyasaṁvāda* is an epitome of the fundamental doctrines of Anubhavādvaita-Vedanta, illustrated in all other works of Appayaśivācārya. His philosophy is a reformed *advaita* based on practical experience in the background of rationalistic view. Appayaśivācārya strongly assures that the reading of *Guruśiṣyasaṁvāda* is sufficient to attain liberation. The author has adopted the style of prose dialogue between '*guru*' (preceptor) and '*śiṣya*' (disciple) with quotations from *Upaniṣad*s. This *saṁvāda* style emerged from vedic *saṁvāda sūkta*s which is favorite style in most of our traditional works like *Upaniṣad*s, *Gītā* and other philosophical treatises.

*Guruśiṣyasaṁvāda* offers the philosophical knowledge through sixty *praśna*s (quieries) and *uttara*s (solutions). The dialogue method is at once fascinating and illuminating attractive both for a beginner and a scholar.

Sri S. Jagannatha deserves our congratulations for his scholarly attempt in editing of the work, *Guruśiṣyasaṁvāda*.

My sincere thanks are due to our Hon' ble Vice Chancellor Prof. Dr. K.S.Rangappa who is giving all encouragement for the publication of this work. My sincere appreciation is to our Rigistrar Dr.C.Basavaraj and Finance Officer Prof. Dr. M. Chandrakumar for their valuable guidance and financial help. I am grateful to Prof. Dr. C. Naganna, Director of the Publication Branch of the University for his valuable guidance and suggestions. I am very grateful to Sri S.Ananda, Director, University Printing press for nice printing.

Prof. Dr. H.P.Devaki
Director
ORI

## On Transcendental Dialogue

The *Upaniads* have been a perennial source of knowledge and wisdom. The modern world extols the virtue of knowledge somewhat pushing the value of wisdom to a corner branding it as not practical and 'profitable'. But it is a certainty that at the end our relentless march on the path of worldly progress we would be tired and fatigued because we realise what we chased all along was nothing but a mirage. Therefore, we do well to listen to our ancient masters whose wisdom has been unfailing and unalloyed.

I thank Dr. S. Jagannatha of ORI for making available the knowledge of one such classical text through his assiduous and scholarly editing.

I thank our hon'ble Vice-Chancellor Prof. K.S. Rangappa for his unstinting support in the publication activities of Prasaranga. I thank our Registrar Prof. C. Basavaraju and the Finance Officer Prof. M. Chandrakumar for helping us in our activities. My thanks are also due to Prof. H.P. Devaki, the Director of ORI for providing the much needed scholarly leadership to this hallowed institution. I remember with gratitude the assistance of my colleagues of Prasaranga Sri S.R. Sudarshana, Smt. T. Kamalamma and Smt. B.M. Manjula and the Director of Printing Press Sri S. Ananda and his team for the prompt delivery of this publication.

**Prof. C. Naganna**
Director
Prasaranga

## Contents

## On Transcendental Dialogue

The *Upaniạds* have been a perennial source of knowledge and wisdom. The modern world extols the virtue of knowledge somewhat pushing the value of wisdom to a corner branding it as not practical and 'profitable'. But it is a certainty that at the end our relentless march on the path of worldly progress we would be tired and fatigued because we realise what we chased all along was nothing but a mirage. Therefore, we do well to listen to our ancient masters whose wisdom has been unfailing and unalloyed.

I thank Dr. S. Jagannatha of ORI for making available the knowledge of one such classical text through his assiduous and scholarly editing.

I thank our hon'ble Vice-Chancellor Prof. K.S. Rangappa for his unstinting support in the publication activities of Prasaranga. I thank our Registrar Prof. C. Basavaraju and the Finance Officer Prof. M. Chandrakumar for helping us in our activities. My thanks are also due to Prof. H.P. Devaki, the Director of ORI for providing the much needed scholarly leadership to this hallowed institution. I remember with gratitude the assistance of my colleagues of Prasaranga Sri S.R. Sudarshana, Smt. T. Kamalamma and Smt. B.M. Manjula and the Director of Printing Press Sri S. Ananda and his team for the prompt delivery of this publication.

**Prof. C. Naganna**
Director
Prasaranga

## Contents

# पीठिका

## १.ग्रन्थपरिचयः

गुरुशिष्यसंवादाख्योऽयं ग्रन्थो नाम्नैव गुरुशिष्यसंभाषणात्मिकां शैलीं दधानोऽप्पयशिवाचार्यस्य कृतिः। गुरुशिष्यसंवादरूपा शैली बहुषु शास्त्रग्रन्थेषु गोचर इति नात्र विशेषतो वक्तव्यं किमप्यवशिष्यते।

ग्रन्थोऽयं ६०प्रश्नेषु तथोत्तरेषु विभक्तः। स्वयं ग्रन्थं कर्त्रा रचितानां बह्वीनामितरासां कृतीनाम् उत्कृष्टं सारं ददात्येष ग्रन्थः। ग्रन्थस्यास्य गद्यं तथा सरलतमं, यथा दर्शनशास्त्रं प्रविविक्षुभिरपि, ग्रन्थं रचयित्रोत्थापिताः पूर्वपक्षाः संशयाश्च सुखेन विना कमपि संशयमवगम्यन्ते। अत्र वादविवादानामनावश्यकं दीर्घसूत्रत्वं वाऽपेक्षितानाम् अंशानां परित्यागो वाऽनपेक्षितानां प्रौढानां पारिभाषिकाणां शब्दानां मिश्रणं वा न दृश्यते। चातुर्येण चितैरत्यन्तमधिकैरुपनिषद्वाक्यैः स्वकीयं मतं द्रढयतुमुत्सहते ग्रन्थं कर्ता येषामपलापो न सुलभः। यथा, स ब्रह्मण एव सर्वदेवोत्कृष्टत्वं प्रतिपादयति तदर्थे मुण्डकोपनिषद्गतं "ब्रह्मा देवानां प्रथमः संबभूव" इति प्राथमिकमेव मन्त्रं चोदाहरति। विविधानाम् उपनिषद्गतानां दृष्टीनां समन्वयार्थे तेन कृतः प्रयत्नो वस्तुतोऽद्भुतः। यद्यपि तेन प्रतिपादितानां सर्वेषामप्यभिमतानाम् अङ्गीकार्यत्वे संशेते नः स्वान्तं तथाऽपि इदं तु वक्तव्यमेव:- काचिन्नूतनता तु तस्य कृतिषु भासते । स्वकीयस्य नूतनं प्रतिपादितस्य सिद्धान्तस्य अनुभवाद्वैतमिति संज्ञामेष ददाति। स्वप्रतिष्ठापितम् अद्वैतम् अनुभवसम्मतमित्यदसीया धारणा धोरणी च। एतेन शाङ्कराद्वैतं नानुभवसंम्मतमिति सोऽभिप्रैतीति सुविस्पष्टम्।

## २.ग्रन्थकर्ता

पूर्वमेवोक्तप्रकारेण गुरुशिष्यसंवादस्य कर्ता अप्पयशिवाचार्यो यो नवीनोपनिषदां प्रामुख्यं परिगणितवताम् आद्यानां विदुषाम् अन्यतमः। शङ्करानन्देन उपनिषद्ब्रह्मेन्द्रेण च नवीनोपनिषदां प्राधान्यं प्रतिपादितपूर्वमेवासीत्। परन्तु तावुभावपि नवीनोपनिषदां व्याख्याने एव सकुतूहलावभवताम् । सर्वासामपि नवीनोपनिषदां परिपूर्णं सारं दर्शयितुं प्रभवतां प्रकरणग्रन्थानां निर्माणे द्वित्रान् ग्रन्थान् मुक्त्वा सुतरामुदासाताम्। अप्पयदीक्षितोऽत्र तावत्यशेत। स बृहदाकारकम् अनुभूतिमीमांसाभाष्यम् अनुभूतिमीमांसासूत्राणां स्वविरचितानामुपरि निरमाद् यत्र सर्वासामप्युपनिषद्गतानां विभिन्नानां दृष्टीनां समन्वयार्थं प्रयत्नं व्यधात्।एतदतिरिक्तान् बहून् तत्साररूपानपि ग्रन्थान् स व्यरचयत्।

स तिरुनेल्वेल्लीनामके तमिळुनाडुप्रदेशीये ग्रामे न्यवसत्। तस्य तमिळुभाषायां तथा मलयाळंभाषायामपि संस्कृतभाषायामिव प्रभुत्वमासीत्। तस्मान्न केवलं संस्कृतेऽपि तु तमिळुभाषायां मलयाळंभाषायां च स प्रचालितलेखनीकोऽभूत्। प्रायशः स उभयोरपि भाषयोः प्रस्थानत्रयव्याख्यानानि रचयितुं कृतसंकल्प आसीदिति प्रतिभाति। फलत्वेन मलयाळंभाषायां स भगवद्गीतां रचितवान्। केन विघ्नेन ब्रह्मसूत्रोपनिषदां व्याख्याकरणसंकल्पस्तदीयो न पूर्ण इति न वयं जानीमः।

अप्पयशिवाचार्यः स्वस्य प्रसिद्धाप्पयदीक्षितान्वयजत्वं साभिमानं ब्रूते। परन्तु अप्पयदीक्षित इव स सर्वेषु शास्त्रेषु सर्वज्ञकल्पो नाभूत्। तस्य दृष्टिः सर्वथा वेदान्ते संलग्नाऽऽभूत्।

## ३.ग्रन्थकर्तुर्नाम

अस्याप्पयशिवाचार्यस्य अप्पयदीक्षित इत्यन्यन्नाम। वस्तुतस्तु प्रसिद्धस्य कुवलयानन्दादिकर्तुरप्पयदीक्षितस्य वंशे "अप्पयदीक्षित" इत्येव नामधारिणो बहवो बभूवुः। प्रकृतस्य अप्पयशिवाचार्यस्य रचनानां मध्ये कासुचन रचनासु अप्पयदीक्षितनाम्ना अपरासु तु अप्पयशिवनाम्ना च समुल्लेखो वर्तते [1]। एतेन उभे नामनी एकस्यैव विदुष आसीदिति स्पष्टभूयिष्ठम्।

---

1.यथा-गुरुशिष्यसंवादाख्यस्य प्रकृतग्रन्थस्य पुष्पिका-

इति श्रीमदप्पय्यदीक्षितेन्द्रान्वयजस्याप्पयदीक्षितस्य कृतिषु गुरुशिष्यसंवादः समाप्तः।

पराशरदीपिकान्ते-

श्रुतिशिरसि नित्यं यस्य निष्ठा वरिष्ठा
गलितनिखिलपाशो योऽमनस्को गृहस्थः।
स्फुटतरमुपदिष्टं येन तत्त्वं स्वतस्त्वं
नम इह गुरवे श्रीसुन्दरेशाय नित्यम् ॥

वराहोपनिषद्भाष्यान्ते-

यद्वक्त्रामृतभानुनिःसृतमहावाक्यामृतं प्रत्यहं
कर्णाभ्यामहमादरेण सुतरां पीत्वा कृतार्थोऽभवत्।
एवं यत्कृपयैव साधु रचिता लोकोपकाराय च
व्याख्येयं गुरवे नमोऽस्तु सततं श्रीसुन्दरेशाय नः ॥

तत्रैव पुष्पिकावाक्यम्-

इति श्रीमत्सुन्दरेश्वरताताशिष्याप्पयशिवाचार्यकृतौ वराहमञ्जूषायां पञ्चमोऽध्यायः।

## ४.ग्रन्थकर्तू रचनाः

स्थूलतया तदीयाः कृतीर्द्विधा विभक्तुं शक्यते।:-१.संस्कृत-रचनाः, २.सस्कृतेतरासु भाषासु रचिता रचनाः।क्रमिकान् सर्वान् विभागानेवं योजयितुं शक्यतेः-१.प्रस्थानत्रयविषयका ग्रन्थाः,२.अनुभूतिमीमांसाभाष्यम्,३.प्रकरणग्रन्थाः।४.भगवद्गीताया मलयाळं-भाष्यम्,५.तमिळुमलयाळयोः प्रकरणग्रन्थाः।

अधिकरणकञ्चुकं गुरुज्ञानवासिष्ठान्तर्गतस्य कस्यचन भागस्य व्याख्यारूपं चेन्नैनगरस्थायाम् आदिसरस्वतीमुद्राक्षरशालायां तेलुगु-लिप्यां 1882 ईसव्यां मुद्रितमासीत्। तदीयासु कृतिषु टुप्कायकं पञ्चदशाङ्गयोगप्रकरणम् अद्वयतारकोपनिषद्भाष्यं च-एवं द्वे तत्रभवता विदुषा एन्.एस्. वेङ्कटनाथाचार्येण संपादिते तथा मैसूरवीयप्राच्यविद्या-संशोधनालयेन प्रकटिते च ।तदीयम् अनुभूतिमीमांसासूत्रं च मयैव संपादितं 'मैसूर् ओरियण्टलिस्ट्' पत्रिकायां प्रकाशितं च[1]। गुरुशिष्य-संवादो तिन्वेल्लीतो ग्रन्थलिप्यां तेलुगुलिप्यां वा प्रकटित इतीव। पोट्टर्कस्य 'एन्सैक्लोपिडिया आफ् इण्डियन् फिलासफीस्' अनुभूति-मीमांसाभाष्यस्य प्रकाशनं तिन्वेल्लीत एव संजातमिति कथयति। उभयमपि मम दृष्टिपथं नैवायातम्।

अप्पयशिवस्य रचनाः प्रायश आदर्शमातृकास्वेवाधुनापि गुप्त-गामिन्यः।ताः मैसूरवीयप्राच्यविद्यासंशोधनालये तथा अड्यार् लैब्ररीसंस्थायाम् -एवं द्वयोरेव हस्तप्रतिभण्डारयोरुपलभ्यन्ते, नान्यत्र। तत्र ग्रन्थलिप्याः प्राधान्यं प्रकामं गोचरः।इतरं तु लिपित्रयं मलयाळं, तेलुगु तथा तमिळु च।

---

1.अधुना अस्यैव ग्रन्थस्यान्ते परिशिष्टतया दत्तमेतत्।

मैसूरवीयप्राच्यविद्यासंशोधनालये वर्तमानास्तु मातृकाः शीर्णा जीर्णाश्च। तस्मादेतासां सर्वासामपि हस्तप्रतीनां शीघ्रतमं संपादनं प्रकटनं चात्यावश्यके।

केवलं अ.शि.रचितानां ग्रन्थानां नामसु दृष्टिपातेन तदीयं वेदान्तज्ञानगाम्भीर्यं प्रति सुस्पष्टा सूचना प्राप्यते(अत्रत्या अङ्काः प्रा.वि.सं.मैसूरुस्थानां मातृकाणाम् अनुक्रमसंख्यासूचकाः)।

**१.प्रस्थानत्रयसंवद्धा ग्रन्थाः :**

1-108.उपनिषद्भाष्याणि बि.408-414, बि.245,बि.246 .447, ए.166, A167,बि.247, P.1227, बि.244, P.132,बि.327-328

109.भगवद्गीताभाष्यम् बि.240

110.ब्रह्मसूत्रभाष्यम् 235,बि.237,बि238, बि.239/2

111.अधिकरणकञ्चुकम्[1]।

**२.स्वतन्त्रो विचारविश्लेषणात्मको ग्रन्थः :**

112.अनुभूतिमीमांसाभाष्यम्(अष्टोत्तरशतोपनिषदां विस्तृतं गम्भीरं च विश्लेषणम्।) बि.847,A.168,बि.235, बि.237, बि.238,बि.239

**३.पुराणव्याख्यानम् :**

113.भागवतव्याख्यानम् बि.236

**४. प्रकरणग्रन्थाः :**

---

1.मुद्रितं गुरुज्ञानवासिष्ठे। अग्रे दृश्यताम्। (P.7)

114.कान्तिमत्येकश्लोकी वि.241
115.कैवल्यसाधनम् वि.332,वि.333
116.गुरुशिष्यसंवादः ए.169,सि.448
117.तत्त्वसंग्रहः बि.239, वि.243
118.निष्ठानुभूतिः बि.329
119.पञ्चदशाङ्गयोगप्रकरणम् बि.236
120.पराशरदीपिका बि.306
121.भागवतैकादशस्कन्धव्याख्या बि.236
122.मन्त्रानुष्ठानक्रमः वि.329
123.योगसारस्वतः सि.449
124.वेदान्तयुद्धप्रकरणम् सि. 450, सि.452
125.वेदान्तव्यवहारमाला सि.451, सि.453
126.शुकजनकसंवादः ए.237
127. षोडशमञ्जरी वि.1310
128. षोडशमालिका वि.241
129.हरिहरब्रह्मसामरस्यम् बि.241

५. मलयाळं-गीताभाष्यम्।

130.भगवद्गीताभाष्यम् ए.237

६. तमिळु-मलयाळं-प्रकरणग्रन्थाः

131.उपदेशतत्त्वम् (तमिळु) बि.237
132.जीवचिन्तामणि (तमिळु) बि.334
133. द्राविडसूत्रम् (तमिळु) बि.242
134.मुक्तिकामधेनु (तमिळु) बि.242

135.मुक्तिरत्नम् (तमिळु) वि.242
136.योगदर्पण (तमिळु) वि.242
137.वेदान्तप्रकरण (मलयाळं) ए.273
138. शिवप्रकाशकट्टळै (मलयाळं) ए.237
139.स्वानुभूति (मलयाळं) वि.270

७. 140.गुरुज्ञानवासिष्ठम्(अग्रिमो विभागो दृश्यताम्।)

तिरुनेल्वेल्लीप्रदेशे यदि पुनः हस्तप्रतिभ्योऽन्वेषणं क्रियेत तस्येतोऽप्यधिकाः कृतयो हस्तप्रतिषु वर्तमानाः कदाचिदुपलभ्येरन्।

## ५.गुरुज्ञानवासिष्ठम्

"गुरुज्ञानवासिष्ठा"ख्यो द्वैताद्वैतविचारपरोऽष्टोपनिषत्सारवान् पद्यमयो ग्रन्थविशेषश्चेन्नैनगरे तेलुगुलिप्यां त्रिषु खण्डेषु मुद्रितः। परन्तु केवलं प्रथम एव खण्डोऽस्मद्दृष्टिगोचरोऽभूत्।ज्ञानवासिष्ठस्तु प्रसिद्धः।एष "गुरुज्ञानवासिष्ठ"स्तु कुत्रापि दर्शनग्रन्थेषु नोल्लिख्यते, न कुत्राप्यस्य नाम श्रूयते।अस्मद्दृष्टस्तु ग्रन्थो आदिसरस्वतीनिलय-मुद्राक्षरशालायां 1882 ईसव्यां चेन्नपुर्यां मुद्रितः।एष पत्तमडैग्राम-वासिना अप्पयदीक्षितेन संपादित इति ज्ञायते। प्रारम्भे पुटे ग्रन्थपरिचय एवं वर्तते:-

"ईशावास्यादिमुक्तिकान्ताष्टोत्तरशतोपनिषत्सारांशगर्भिते सद्योमुक्तिक्रममुक्तिजीवन्मुक्तिविदेहमुक्तिकारणीभूतज्ञानकाण्डो-पासनाकाण्डकर्मकाण्डाख्यकाण्डत्रयमण्डिते स्थूलसूक्ष्मकारणतुरीयभेदेन द्वादशभेदवत्त्रिपाद्ब्रह्माभिव्यञ्जकद्वादशपादशोभिते एकैकपादस्य पञ्चविंशत्यध्यायमण्डिते स्वगतश्लोकसहस्रादौ गायत्र्या एकैकमक्षर-

मलङ्कुर्वच्चतुर्विंशतिसहस्रश्लोकोपेते श्रीदक्षिणामूर्तिब्रह्मसंवादात्मके श्रीवसिष्ठमहर्षिणा लोकानुग्रहार्थं तारकब्रह्मावतार<u>श्रीरामचन्द्रं</u> निमित्तीकृत्योपदिष्टे तत्त्वसारायणे प्रबलतरे ब्रह्मविष्णुरुद्रादि-सकलदेवताराध्ये जन्मान्तरसहस्रार्जितानेकपुण्यराशिलभ्ये धर्मादिचतुर्विधपुरुषार्थप्रदे दर्शनस्पर्शनपूजनपठनश्रवणश्रावणादिकान्यतममात्रेण नित्यमङ्गळप्रापके <u>गुरुज्ञानवासिष्ठे</u> ज्ञानकाण्डः निखिलाध्येतृजनानामानन्दाप्तये चतुरधिकशतग्रन्थनिर्मातृभिः श्रीमदप्पयदीक्षितैः प्रणीतयाऽधिकरणकञ्चुकाख्यसूत्रार्थविवृत्त्या साकं श्रीपत्तमडैग्रामनिवासिना श्रीमदप्पयदीक्षितेन <u>नानादेशानीतानेकग्रन्थावलोकनपूर्वकं</u> सम्यक् परिशोधितः।"प्रायेण अ.शि.विरचितेषु ग्रन्थेषु प्रतिपाद्यान् विषयानेव गुरुज्ञानवासिष्ठं गर्भीकरोतीति विशेषणैरत्रत्यैः स्पष्टायते।

ग्रन्थेऽस्मिन्, ऋषयः स्वीयानाध्यात्मिकान् प्रश्नान् वसिष्ठं पृच्छन्ति। जीवन्मुक्तोऽपि वसिष्ठः स्वस्योपदेशकत्वार्हतां न पश्यति, ब्रह्माणं चोपसर्पति।ब्रह्मा तु तैः साकं शिवमुपसर्पति, तं स्तौति, आध्यात्मिकान् प्रश्नांस्तान् पृच्छति च। शिवो बोधनमारभत इति क्रमोऽत्रानुसृतः। मध्ये निदाघ-ऋभुसंवादः, अजातशत्रु-गार्ग्यसंवाद इत्याद्या अवान्तरसंवादा[1] अप्यन्तः प्रविशन्ति।रामचन्द्रस्य प्रवेशोऽत्र न दृष्टः।तस्मात् "तारकब्रह्मावतार<u>श्रीरामचन्द्रं</u> निमित्तीकृत्य"इत्यत्र ब्रह्मरूपं श्रीरामचन्द्रमित्यर्थो ग्रहीतव्य इति प्रतिभाति।<u>तत्त्वसारायणे</u> इत्यस्य विशेषणस्य कोऽर्थ इति न स्फुटम् ।

---

1.अमुकाः संवादाः उपनिषद्गतैरेतादृशैरेव संवादैः सादृश्यं भजन्ते।यथा, गार्ग्याजातशत्रुसंवादो बृहदारण्यकोपनिषदि(द्वितीयाध्याये प्रथमे ब्राह्मणे ) वर्तते।निदाघऋभुसंवादश्च तेजोबिन्दूपनिषदि पञ्चमषष्ठाध्याययोः, महोपनिषदि च तृतीयाध्यायतः आसमाप्ति वर्तते।

अत्र संवादकर्तारौ "वसिष्ठः श्रीरामः (ब्रह्मरूपी?)च" सर्वथा ग्रन्थं रचयितुरेव मानसपुत्रावित्यत्र न कोऽपि संशयः। परन्तु कृत्रिमायाः सृष्टेरस्याः (कृत्रिमो) ब्रह्मा किम् अप्पयशिव एव वा इति तु न निश्चीयते। यतः गुरुशिष्यसंवादे ३६तमे प्रश्ने "प्रारब्धं विफलं सफलं चेति द्विविध"-मित्यभिप्रायं गुरुवासिष्ठगतमनूद्य खण्डयति ग्रन्थकर्ता। परन्तु गुरुवासिष्ठ एव कञ्चन भागमधिकरणकञ्चुकनाम्ना किमर्थं व्याख्यातीति तु संशयग्रन्थिः। "नानादेशानीतानेकग्रन्थावलोकनपूर्वकम्" इत्यत्र पुस्तकमिति शब्दो नास्ति। हस्तप्रतिरित्यर्थे संस्कृतभाषायां वर्तमानो शब्दः पुस्तकं, न तु ग्रन्थः। ग्रन्थस्तु रचना। अत्र ग्रन्थशब्दोपन्यासेनेदमभ्यूहितं शक्यते- यदुपनिषद एवात्र ग्रन्थशब्दाभिलप्या इति। अन्यथा N.C.C.पुस्तकसूच्यां कथमस्य ग्रन्थस्यैकस्या अपि हस्तप्रतेरुल्लेखस्य सर्वथाऽभावः? अप्पयदीक्षिताचार्यीया कृतिरियमाहोस्वित् पत्तमडै अप्पयदीक्षितस्यैव वा चेष्टितमिदम्[1]?

प्राचीनस्य योगवासिष्ठस्य प्रभावेण कासाञ्चनोपनिषदामुत्पत्तिरासीदिति विद्वत्सम्मतः पक्षः पूर्वमेव न्यवेदि। नवीनेऽस्मिन् गुरु"वासिष्ठे" वसिष्ठेन पृष्टो रामः (तारकब्रह्मरूपी?) शिवस्य पुरस्तात्स्वकीयान् संशयान् निवारयति !

केवलमेवं पुराणादिप्रसिद्धवसिष्ठनाम्नोऽत्र स्थापने योगवासिष्ठनामानुकरणे च मम विरोधो न पुनर्ग्रन्थेन स्पृष्टे वेदान्तविचारस्तरे।

---

1.नवीनसिद्धान्तानां पूर्वकालिकत्वप्रतिष्ठापनार्थं वेदप्रसिद्धानाम् ऋषीणां संज्ञाया बलादाकर्षणम् अस्माकं राष्ट्रे कश्चन सांप्रदायिको बलवांश्च रोगः। एतेन रोगेण ग्राह्योऽप्यंशः कदाचिदग्राह्यतामश्रद्धेयतां चैति। शताधिकान् ग्रन्थान् निर्मातुर्बुद्धिः किमर्थमेवं निम्नस्तरीयेषु कर्मसु प्रावर्ततेति ब्रह्मरहस्यम्!

अत्र प्रतिपाद्यमानानां भिन्नाभिन्ननिमित्तोपादानकारणवाद-सुषुप्तब्रह्मवादनिरास-ब्रह्मत्रैविध्यवादसत्रिपाद्ब्रह्मनिर्णयसत्रिकालाद्वैत-वादनिषेधादिविषयाणां संज्ञासु दृष्टासु गुरुशिष्यसंवादं कर्त्रैव रचितोऽय-माहोस्वित् तत्सोदरेणेति झटिति सादृश्यं मनसि स्फुरति।

## ६.अनुभवाद्वैतम्

'अनुभवाद्वैतम्'इत्ययं शब्दः प्रयोगार्हम् अद्वैतं सूचयति। नूतनोऽयमद्वैतसिद्धान्तः। शाङ्करमद्वैतम् अप्रायोगिकत्वेन निन्दत्येष सिद्धान्तः। सार्वाकालिकमद्वैतम् अप्पयशिवस्य सुतरामनभिमतम्। केवलं मुक्तावेवाद्वैतमिति, व्यावहारिके प्रपञ्चे द्वैतमवश्यमभ्युपेयमिति चैष घोषयति।

परन्त्वेतत् तर्कविरुद्धम्। द्वैताद्वैतयोः कथं कार्यकारणभाव इति नात्र स्फुटम्। अद्वैतस्य कारणत्वं द्वैतस्य कार्यत्वं पुनर्द्वैतस्य कारणत्वमद्वैतस्य कार्यत्वमिति कथंकारं घटताम् ? सृष्टेः पूर्वं निर्मुक्ताध्यानां जीवानां संसारबन्धः परमेश्वरलीलयेति वदन् स्वमतोपोद्बलकाय "लोकवत्तु लीलाकैवल्यम्" इति सूत्रितवन्तं बादरायणं साक्षित्वेनाकर्षत्यप्पय-शिवः। संसारबन्धमनिच्छतां जीवानां यदि परमेश्वरलीलया संसारबन्धः, अस्तु नाम मोक्षमप्यनिच्छतां पामराणां परमेश्वरलीलयैव मोक्षः।

ज्ञानकर्मणोः समुच्चये परम एवाग्रहोऽप्पयशिवस्य। "यावज्जीव-मग्निहोत्रं जुहोती[1]"ति वाक्यमेवास्य बलवानवष्टम्भ इति प्रतिभाति। अत्र तस्य युक्तयः सर्वथाऽप्यप्रशस्ताः। कदाचित् सः 'महाजनो येन

---

1. वाक्यमिदं कुत्रत्यमिति न ज्ञायते। शैल्या कस्यचन ब्राह्मणग्रन्थस्य वाक्यमिद-मिति प्रतिभाति। मीमांसादर्शने (२.४.१)एतद्वाक्यस्मारकं सूत्रं विद्यते।

गतः स पन्था'इति सुभाषितं शरणीकुरुते। शाङ्करान् अभिप्रायान् पूर्वपक्षयित्वा स्वविचारान् उत्तरपक्षीयान् मन्यत एषः!विनाप्यष्टोत्तर-शतोपनिषदामध्ययनं केवलं गुरुशिष्यसंवादस्य पठनेन मुक्तिं घोषयति च। त्रयः शङ्करसम्मता विचारास्तस्य सुतरामनभीष्टाः:-त्रैकालिकमद्वैतं, मोक्षमार्गे कर्मानुष्ठानस्य प्राधान्याभावस्तथा संन्यासिनां प्राधान्यं च। वस्तुतस्तु तेन शङ्करखण्डनव्यपदेशेन यदुक्तं तदप्रशस्तत्वादुपेक्षणीयम्।

एतत् कथमप्यास्ताम्। मतवैविध्येन मतिवैरुध्यं संभवत्येव। तथाप्यष्टोत्तरशतोपनिषद्गतानां विविधानां विरुद्धानां च विचाराणां क्रमिके योजने तद्विश्लेषणे च समर्थेन स्वकीयेनानुभूतिमीमांसाभाष्येण अप्पयशिवः पूर्वसूरिभिरनारूढं परमोत्कृष्टमेव वेदान्तसिंहासनम् आरूढ-वानित्यत्र न कोऽपि संशयः। केवलवेदान्ताध्ययननिरतानां तपो-ध्यानादिरहितानां लौकिकानां तदीया देशनाः सम्यञ्चं मार्गं दर्शयन्ति।

## ७.प्रभावः

गुरुशिष्यसंवादस्य उपक्रमपद्येषु अप्पयशिवाचार्यः अप्पय्य-दीक्षितं तथा सुन्दरेश्वरतातपादं च प्रणमति।

शताधिकप्रबन्धान् कर्तुरप्पयदीक्षितस्य अद्वैतग्रन्थाः कल्पतरु-शास्त्रसिद्धान्तलेशसंग्रहादयः शिवाद्वैते च शिवार्कमणिदीपिकादयस्तु सुतरां प्रसिद्धाः। वस्तुतस्तु संस्कृतस्य ज्ञानक्षेत्रे तेनास्पृष्टं किमपि नास्ति। तस्य प्रसिद्धिस्तथा वर्तते यथा पाठकेभ्यस्तस्य परिचायनमनावश्यकम्।

सुन्दरेश्वरकर्तृकः कोऽप्यद्वैतचिन्तामणिः मैसूरवीये प्राच्यविद्या-संशोधनालये वर्तते[1]। अप्पयशिवस्याचार्योऽयमेव वेत्यत्र निःसन्दिग्धं

1. ग्रन्थलिपिः-P.L.3356,तेलुगुलिपिः-A.653 च। तेलुगुप्रत्यां प्रथमं पुटद्वयं नष्टम्। मध्ये मध्येऽपि पङ्क्तिलोपः।

किमपि वक्तुं न वयं प्रभवामः। उपलब्धे भागे द्वैताद्वैतस्य समर्थनपरा बह्व्यो युक्तयो वर्तन्ते। ता युक्तयो नवीनन्यायीयाभिर्वाक्यार्थ-फक्किकाभिः करम्भिताः। नवीनन्यायशैली तु अप्पयशिवस्य कस्यामपि कृत्यां न गोचरः। तस्मात्सुन्दरेश्वरस्य कृतिभ्यः अप्पयशिवः कियदचूष-दिति वक्तुं न वयं पारयामः। अ.शिवो नवीनन्यायं नैवाध्यगीष्टेति प्रतिभाति, तदीयासु कृतिषु न्यायशैल्याः सर्वथाऽप्यपरामृष्टत्वात्। अद्वैतचिन्तामणेः प्रकटने जाते विषयेऽस्मिन् अधिकं प्रकाशं वितरीतुं वयं शक्ष्यामः।

प्रथमे पीठिकापद्ये "अप्पयदीक्षितस्तथा सुन्दरेश्वर उभावप्येतौ कलियुगे गृहस्थाश्रम एव श्रेष्ठ इति प्रत्यपादयताम्" इत्यप्पयशिव उवाच। अत्रेदं वक्तव्यम्:-

अप्पयदीक्षितस्याभिप्रायेण शङ्कराचार्यो मुक्तो वा न वा? यदि न मुक्तः, गृहस्थाः शङ्कराचार्यस्यानुयायिनः सन्तः कया युक्त्या गृहस्थाश्रमः श्रेष्ठ इति जानीयुः? अप्पयदीक्षितस्याभिप्रायेण यदि स मुक्तः, कलियुगेऽपि मोक्षाधिकारः संन्यासिनामस्त्येवेत्यकामेनापि गृहस्थेन सता तेनाभ्युपगन्तव्यम्[1]!

अस्मिन्नर्थे सुन्दरेश्वरस्य धीः कया दिशा प्रावर्ततेति न वयं किमपि जानीमः। तदीयायां रचनायां कतिचन पङ्क्तयः ज्ञानकर्मसमुच्चयपरास्तु उपलभ्यन्ते[2]। परन्तु संन्यासिनामपेक्षया गृहस्थाः प्रशस्यतरा इत्यभि-प्रायकं वाक्यं तु कुत्रापि न मयावालोकि।

1.अप्पय्यदीक्षितस्य द्वे पत्न्यौ आस्ताम् !

2.[A.653 तेलुगुप्रत्यां-] "पुत्रकर्मविद्यासंपन्नो गृहस्थ एव कृत्स्नसाधन-संपन्नत्वात् (पुटसंख्या ९२)। न केवलं पुत्रोत्पादनमात्रेण लोकजयः। किन्तु पुत्रेण सम्यक्कर्मानुष्ठानेन (पुटसंख्या ९२-९३)। यदप्युक्तं किं प्रजया करिष्यामी-

अप्पयशिवः संन्यासिनो द्वेष्टीति तु तदीयाभिः कृतिभिः स्पष्टभूयिष्ठम्। प्रायशोऽप्पयशिवेन बहूनेव संन्यासिब्रुवान् वञ्चकान् दृष्टवता भाव्यम्। परन्तु एतत् तस्य "सर्वेऽपि संन्यासिनस्तादृशस्तरीया एव" इति निर्धारणायाः हेतुत्वं यदि नायास्यत् समीचीनमभविष्यत्। संन्यासिनो द्विषन्नपि अप्पयशिवाचार्यः संन्यासोपनिषदादीनां सर्वथा त्यागं कर्तुं नाशक्नोत् तासामष्टोत्तरशतोपनिषदां मध्य एव परिगणितत्वात्! प्रायशः स्वकीयं कर्तव्यभारं विस्मृत्य स्वरुच्यनुसारेण संन्यासग्रहणम् अप्पय्यशिवाचार्यो न रोचयत इति तु कर्तव्यभारं विस्मृतवतां संन्यासिनां विषये तदीयां जुगुप्सां दर्शयति।

अष्टोत्तरशतोपनिषदामप्यध्ययनं तद्गतानां विषयाणां मननं गृहस्थेन नानाकर्तव्यभारवता शक्यते वेति प्रश्नोऽत्रोदेति। अन्यच्च। "कोऽपि गृहस्थः कदापि मानसिकीं निम्नतां नैवानुभवति" इति वा, "गृहस्था एव मुमुक्षूणां मध्येऽग्रेसरा" इति वा गर्वेण घोषणं कथं साधु ? अत्र कष्टेन नवीनोपनिषत्पुराणादिगतानां श्लोकानामुद्धरणं, तेषाम् अतात्पर्याणामपि तत्तात्पर्यवत्त्वेन प्रतिपादनार्थम् अमूल्यस्य कालस्यापव्ययः-अथवा तत्तात्पर्याणामपि युक्तिविचारहीनानां, 'विवाहकरणं मोक्षाध्वनि साध्वि'ति च मर्दलं वादयितुम् आध्यात्मिकत्वप्रहसनमपि यथाशक्त्यभिनेतुं दुष्प्रेरणां दातॄणां च पद्यानां विषयेऽतीवान्धश्रद्धा- एतत् सर्वं "यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम्? लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति?"इति

---

त्यादिना कर्मणां मुक्तानुपयोगकथनपूर्वकसंन्यासो विहित इति तदप्यसत्। न हि तत्र प्रजादीनामनुपयोग उच्यते। किन्तूपयोगं सिद्ध्यवत् (सिद्धवत्?)कृत्वैव साध्ये सिद्धसाधनानुष्ठानं फलमित्युच्यते(पुटसंख्या ११३)। कर्मसमुच्चितैव विद्या अमृतत्वहेतुः(पुटसंख्या ११३)"।

श्लोकस्यैव स्मारकमिति प्रतिभाति।

प्राचीनकाले वेदान्तभाष्यकाराः सर्वेऽपि संन्यासिन एवासन्निति तु प्रसिद्धम्। कालक्रमेण उपनिषत्प्रपञ्चे प्रवेशमीहमानैर्गृहस्थैः स्व-रुच्यनुसारेण व्याख्यादिनिर्माणं चेष्टितवद्भिः पुराणश्लोकानां सांकर्यम् उपनिषद्विचारेषु कृतम्। अतिसाहसिकैस्तूपनिषन्नामधारिण्यो नवीनाः कृत्रिमा एव कृतयो विरचिताः।

## ८.नवीना उपनिषदः

औपनिषदीं शैलीमनुकृत्य वाऽननुकृत्य वा नवीना रचयितारो नवीनाः कृतीर्विरचय्य तासाम् उपनिषदिति संज्ञाम् अभ्यधुः। काश्चन उपनिषदः प्रायशः योगवासिष्ठकालोत्तरकालिक्यः। काश्चनोपनिषदो योगवासिष्ठात् कांश्चन विचारानाजह्रुः कांश्चन नवीनानपि विषयान् स्वीयान् योजयामासुः। योगवासिष्ठस्य रचनाकालो न निर्धारितः। परन्तु स शङ्कराचार्यकालोत्तरकालिक इत्यत्र न संदेहः। टि.जि.मैन्कर-स्याभिप्रायेण[1] योगवासिष्ठ एवाधमर्णो न पुनर्नवीनोपनिषदः। कमपि निर्णयं प्रति धावनात् प्रागस्माभिरिदं ज्ञातव्यं यन्नवीना अप्युपनिषद ऋणग्रस्ता एव या भगवद्गीता-प्राचीनोपनिषदामेवाग्रकोटौ प्लवन्ते। एवं सति योगवासिष्ठाद् यदि नवीनोपनिषद्भिरधिकं चूषितेऽपि न किमप्या-श्चर्यम्। कें.एस्.अर्जुनवाडकरस्याभिप्रायेण[2] सिद्धान्तशिरोमणिं रच-यितुर्भास्कराचार्यस्य कालानन्तरमेव योगवासिष्ठस्योत्पत्तिर्यत् पृथ्व्या

---

1.*The Vāsiṣṭharāmāyaṇa: A study.* Meharchand Lachamandas, New Delhi-110002 1977.
2.*Yogavāsiṣṭha- A frank Appraisal.* ABORI LXXXII 2001 Pp.213-231

"आकृष्टि"शक्तिम् उल्लिखति (3.3-12,32)। ऐदंप्राथम्येन पृथ्व्या आकृष्टिशक्तेरुल्लेखं (सिद्धान्तशिरोमणौ गोलाध्याये भुवनकोशे 6) भारते कृतवतो भास्कराचार्यस्य कालः क्रैस्तशकीया 1150 ईसवी।

मूलभूतानामुपनिषदामपेक्षयैतासाम् अपकृष्टतां कोऽपि न संदेग्धि। तासामुपनिषत्त्वरूपं धर्ममपि कोऽपि संशयीत। परन्तु एतासां नवीनोपनिषदां सर्वात्मना नैरर्थक्यमाशङ्क्य झटिति प्रणोदनं तु न समीचीनम्। गर्भोपनिषदादिषु तु मूलभूता विचारा बहवो वर्तन्ते।

नवीनानामुपनिषदाम् उपनिषत्त्वं तु एवं समर्थनीयम्:-

महाभारते भगवद्गीतातिरिक्ताः गीता उपलभ्यन्ते। एतादृशीनां गीतानां रचनाकालोत्तरकाले रचिता बह्व्यो रचना गीतात्वेन स्वाः ख्याप्यन्ते। काश्चन पुराणादिषूपलभ्यन्ते। अथ च काश्चन स्वतन्त्राः। गीतेति नाम्नाऽऽकृष्टाः केचन स्वविरचितेषूपदेशप्रधानेषु पद्यग्रन्थेषु गीताभिधानं स्थापयित्वा तत्प्रचारमचिकीर्षन्नित्येवात्र तत्त्वम्। परन्त्वे-तावता ताः सर्वाः कृतयोऽवरा इति तु वक्तुं न शक्यते।

कैश्चित्त्वष्टादशपुराणातिरिक्तानि नूतनानि पुराणान्येव निर्मितानीति तु सुज्ञातं वस्तु। स्थलपुराणानि त्वसंख्याकानि।

काश्चन संज्ञा लोकेऽतितमामभीष्टतमा भवन्ति। जनास्तु नवीनाः कृतीस्ताभिरेव संज्ञाभिरभिदधति। कदाचिदतिपामरास्तु तादृशं व्यवहारं समर्थयन्ते, 'एषा संज्ञा ध्वनिं (?)जनयति' इत्यादि प्रतिपादयन्तः ! कदाचिच्च जोषमासते । 'रामकृष्णवचनवेदः' मन्मथनाथगुप्तेन वङ्ग-भाषायां विरचितस्य 'कथामृता'ख्यस्य कन्नडानुवादः। केनापि वेदेन तस्य न कोऽपि संबन्धः !

एताः सर्वा अप्युपनिषद 'ऋषिदृष्टा' इति ख्याप्यन्ते, 'रचयितृणां संज्ञायै नान्वेष्टव्य'मिति च कत्थन्ते। उपनिषदिति संज्ञाकरणस्य अधिकारः केनापि न स्वायत्तीकृतस्तस्माद् यः कोऽपि स्वीयां रचनाम् उपनिषदम् अभिधातुं स्वतन्त्रः[1]! जातिमताभ्यां प्रेरितास्तान्त्रिका वा, स्वाभ्युत्प्रेक्षितसिद्धान्तप्रतिष्ठापनाय युक्तीर्वयितुं प्रयतमाना वा,मतीय-ग्रन्थानां सारं ग्रन्थात्मना निवन्द्धुं सोत्साहा वा- एते सर्वेऽपि नवीनोपनिषदां रचयितारः। मुग्धा भक्ता अपि नवीनोपनिषदां निर्माणेऽनल्पं पात्रमवहन्त।

संन्यासशब्दादेव केचन भीता ऊढा गृहस्था अपि स्वकीयं करकौशलं प्रदर्शयन्तो 'गार्हस्थ्यधर्मः मोक्षमार्गे सहायकः परमोत्कृष्टो धर्म' इति घोषणाचापल्येन नूतनान् कांश्चन ग्रन्थानसृजन् ये स्वकीयाभ्यो नवीनाभ्यो रचनाभ्य उपनिषदिति संज्ञां दातुं स्वातन्त्र्यं समाददत।

अन्यच्च। नवीना उपनिषदः सर्वथैव सरलतरा इति वा लघुतरा इति वक्तुं न शक्यते। त्रिपाद्विभूतिनारायणोपनिषत्तु प्राचीनोपनिषदपेक्षया क्लिष्टतरा दीर्घतरा च। काश्चन नवीना उपनिषदस्तु तान्त्रिकाणामेव रचनास्तस्मात्तासां बोद्धारस्तान्त्रिका एव न तु पामराः। मुग्धैरपि भक्तादिभिः काश्चनोपनिषदः सृष्टा या अत्यन्तमेव सरलाः। नवीनोपनिषदिति नाम्नः श्रवणानुपदम् अमुकमेव लक्षणं तासामिति हठात् प्रतिपादनं कर्तुं न शक्यते। चातुर्येण त्वेवमभिदध्मः- उपनिषत्संज्ञावत्त्वे सति वेदान्तप्रतिपाद्यविषयवत्त्वमुपनिषत्त्वम्! यद्यपि

1.मठाम्नायोपनिषन्नम्नी काचिद् रचना अड्यार्लैब्ररीतः प्रकाशितानाम् 'अप्रकाशितानाम् उपनिषदाम्'मध्येऽन्यतमा यदन्ते "इति शङ्कराचार्यविरचिता मठाम्नायोपनिषत्समाप्ता" इति पुष्पिका ! वस्तुतस्तु नैषा उपनिषत्। आदिशङ्कराचार्येण स्थापितत्वेन महाजनैः सश्रद्धं विश्वस्तेषु चतुर्षु मठेषु अनुष्ठेयानां नियमानां संग्रह एवेयं रचना। केषुचन संस्करणेष्वेषा 'चतुराम्नायोपनिषदि'ति, 'आम्नायस्तोत्र'मिति च संज्ञावती दृश्यते!

प्राचीनोपनिषदामपि कोटेरनेन लक्षणेनावगाह्यमानत्वाददतिव्याप्ति-दोषोऽवश्यमेव संभवति ।नवीनोपनिषदां स्वरूपलेखनं नातीव सुलभ-मिति गत्यन्तराभावादेवं विहितम्।तद्विचारस्य सर्वथाऽप्यप्राकरणिक-त्वादधिकमत्र लेखनीं व्यापारयितुं न वयमुत्सहामहे।

## ९.स्वतन्त्रं सूत्रं भाष्यं च।

बृहदाकारकम् अनुभूतिमीमांसाभाष्यं तु नवीनोपनिषदाम् अगौणत्वमित्यत्र बह्वीर्युक्तीर्ददाति।वस्तुतस्तु भाष्यग्रन्थोऽयं सर्वास्व-प्यष्टोत्तरशतोपनिषत्सु दृश्यमानानां संकीर्णानां बुद्धिपद्धतीनां प्राथमिकं विश्लेषणं, विप्रकीर्णानां विचाराणां सम्यग् योजनाय कृतः प्राथमिकश्च यत्नो यत्फलं परमोत्कृष्टसंशोधनप्रवन्धत्वेन परिणतम्।वादरायणस्यापि तादृशमेव पण्डितकृत्यम्। परन्तु तस्याविस्फुटा शैली विदुषामाचार्याणां च मध्ये बहूनां वादानां विवादानां च हेतुर्वभूव।अमुमेवांशं मनसि कलयित्वा "बादरायणस्य शिष्या भेदरायणा अभवन्"इति नवीन आभाणको मया सृष्टः।अनुभूतिमीमांसासूत्रस्य कथा सर्वथैव भिन्नतरा।एतत् कथमपि वादविवादयोरवसरं न ददाति।अत्र सूत्राणि सर्वथैव स्पष्टानि।भाग्यात्स्वयं सूत्रकार एवात्र भाष्यकारोऽपि।

व्याकरणेतरेषु शास्त्रेषु सूत्रविरचना न हि महत्तमा सिद्धिः। नवीनानां सूत्रग्रन्थानां विषये सत्यतरमेतत्।कोऽपि स्वस्य चिन्तनानि सूत्रात्मना संग्रहीतुं शक्नोत्येव।लघुकायकानां सूत्रग्रन्थानां विषये त्विदं सत्यतमम्।वस्तुतस्तु ग्रन्थानाममीषां श्रेष्ठत्वं नाम परमोत्कृष्टं फल-मवलम्बते, न केवलां रचनाम्।परन्तु अनुभूतिमीमांसासूत्रसदृशे ग्रन्थे तु रचयित्रा प्रबलाभिर्युक्तिभिः शुद्धं विचारक्रममवलम्ब्य विविधाभि-र्दृग्भिः परिकर्मितानां सूत्राणां क्रमो निर्धारणीयो व्यवस्थापनीयश्च। एतद्वस्तुत एव भगीरथप्रयत्नसोदर्यो महान् कर्तव्यभारः।

अप्पय्यशिवस्त्वस्मिन् विचारे पाठकान् निराशानिर्विण्णान् न करोति। सोऽतीवश्रमेण समग्रं सूत्रग्रन्थम् अधिकरणेषु विभनक्ति। अधिकरण-नाम-पठनानुपदं पाठकः प्रतिपाद्यं वस्तु जानाति। भाष्यस्य पठनं तु विषयम् अतीव स्पष्टं भासयति।

## १०.प्रकृतं संस्करणम्

गुरुशिष्यसंवादस्य द्वे मातृके मैसूरुप्राच्यविद्यासंशोधनालये वर्तेते । द्वे अपीमे मातृके परिचाययत्यधो निर्दिष्टा सारणीः-

| | | |
|---|---|---|
| **मातृकाङ्कः** | ए.१६९ | सि. ४४८ |
| **लेख्यसामग्री** | कागदम् | कागदम् |
| **मापनम्** | २८X२१.५ से.मी. | ३३X१०.८ से.मी. |
| **लिपिः** | मलयाळम् | ग्रन्थ |
| **पत्रसंख्या** | १-१५२ | १-५२ |
| **प्रतिपत्रं पङ्क्तिसंख्या** | ३५ | ६० |
| **प्रतिपङ्क्ति वर्णसंख्या** | १० | १२ |
| **असमग्रा वा समग्रा वा** | समग्रा | समग्रा |
| **स्थितिः** | साधारणी | शिथिला |

प्रकृतं संस्करणं केवलं मलयाळंलिपिलिखितामेकामेव मातृकाम् ( ए.169 )उपयुज्य सज्जीकृतम्। तत्र कारणं तु ग्रन्थलिपि-लिखिता मातृका (सि.448) तथा जीर्णा यथा तस्या उद्घाटनमपि क्लेशकरम्। अस्यां मातृकायां कतिचन पत्राणि परस्परेण अवलग्नानि। कतिचन च भग्नानि। पत्राणि तथाऽतीव कृशानि यथा पश्चाद्भागस्य लेखनं पूर्वभागेऽतिक्रान्तम्। मातृकाया अस्याः केवलं हस्तेनादानमपि महाक्लेशप्रदं कर्म।

मलयाळंमातृकाया अपि (ए.169) पत्राण्यतीव कृशानि।

परन्त्वत्र लेखनम् एकस्मिन्नेव पार्श्वे वर्तते। अक्षराणि रम्याणि स्फुटानि च। लेखनशैली शुद्धा। पत्राणि द्वयोः स्तम्भयोर्विभक्तानि। वामस्तम्भे लिखितम्। दक्षिणस्तम्भो रिक्तः। प्रायशो ग्रन्थं रचयित्रा मलयाळं भाषायां ग्रन्थानुवादं चिकीर्षुणा भाव्यम्। केनाप्यस्मदज्ञातेन कारणेन तस्य चिकीर्षा फलवती न बभूव।

भूभ्रमणविषये ''तमर्थमुपरिष्टाद् विस्तारयिष्यामः(पु.९०)'' इत्युक्त्वा तद्विषये किमपि नोक्तमग्रे। अत्र कारणं वयं न जानीमः।

अध्यप्पयशिवं प्रत्यग्रं संशोधनं चिकीर्षूणां कृते परिशिष्टत्वेन १.अनुभूतिमीमांसाभाष्यस्य चतुःसूत्र्या भाष्यपाठः, २.शङ्कररामानुज-मध्वश्रीकण्ठप्रणीतानां शारीरकभाष्याणां तिरस्कारे समर्थनां ददत् अनुभूतिमीमांसाभाष्यभागः, तत्र सौन्दर्यलहरीं कर्तुरनद्वैतिनः शङ्करा-ख्यस्य तान्त्रिकस्य विषये लघ्वी टिप्पणी, ३. कैवल्यसाधनम् ४. अनुभूतिमीमांसासूत्रं च एतान्यदायिषत। ग्रन्थं रचयित्रा समुद्धृतानां वचनानां सूचिका ग्रन्थान्ते योजिता। अनुभूतिमीमांसासूत्रस्य संपादनार्थम् उपयुक्ता मातृकास्तत्रैव परिचायिताः। "माडर्न् स्कालर्" इति संज्ञा-धारिणां मनःसमाधानाय इङ्ग्लीष्भाषायामपि काचित् पीठिका रचिता।

पञ्चदशवर्षाणि संपादितैतद्ग्रन्थस्य मम। अधुना प्रकाशन-सौभाग्यमस्य जातम्। "क्लेशः फलेन हि पुनर्नवतां विधत्ते"।

एतस्य ग्रन्थस्य प्रकाशने सर्वविधानपि प्रोत्साहान् दत्तवत्याः, अथ च, निजनिर्मितया पीठिकया च ग्रन्थममुं भूषितवत्याः प्राच्यविद्या-संशोधनालयस्य निर्देशिकायाः प्राचार्यायाः डा.एच्.पि. देवकीवर्यायाः अत्यन्तमेव कृतज्ञोऽस्मि।

मैसूरु
२०१३

एस्.जगन्नाथः

# Introduction

## 1.The work: A brief note

*Guruśiṣyasaṁvāda* is a work on Anubhavādvaita and authored by Appayaśivācārya. It is in the style of conversation of *Guru* and *śiṣya*, a firmly rooted system of many standard śāstric works.

The work is divided into 60 *praśna*s and *uttara*s. The work is very fine summary of the larger works by the same author on the same subject. The prose style of the work is very clear and even for those who are in initial stages of Darśana can understand the arguments of the author without any kind of ambiguity. The author's mode of expression is always clear and to the point. It neither procrastinates arguments and counter-arguments unnecessarily nor leaves the important discussions unmentioned as well as avoids unnecessary logical jargons. The author cleverly chooses sentences from *Upaniṣad*s and places them in front of the reader to authenticate his views. Pushing them aside is not very easy. For example, the author argues Brahman is the supreme God and vouches the same with the first *mantra* of

*Muṇḍakopaniṣad*: *brahmā devānāṁ prathamaḥ sambabhūva*. The author's effort for making SAMANVAYA (=Reconciliation) to the seemly divergent and haphazard opinions of Upaniṣads is simply marvelous. Even though it may not be possible to sympathize with the author in all the views he proposes, definitely they give fresh outlook on some of the Vedāntic concepts. The author names his newly adumbrated theory ***Anubhavādvaita***.

## 2.The author

The author of the work, Appaya-śivācārya(AŚ), disciple of Sundareśvara was one of the pioneers in recognizing the importance of modern *Upaniṣad*s. Some earlier authors like Śaṅkarānada and Upaniṣad-brahmendrayogin had already attempted to establish the notability of modern *Upaniṣad*s in their glosses and commentaries. But they did not bother about conceiving comprehensive digest type works except one or two. But our author became champion even in that attempt. He conceived very large *Anubhūti-mīmāṁsā-bhāṣya* on his own *Anubhūti-mīmāṁsā-sūtras* (arrangement of the divergent views of *Upa-*

*niṣads* with logical decision in succinct manner). He wrote some digests that contain essence of his major works.

Appayaśivācārya lived in the first half of 18th century at Tirunelvelli, Tamiḷunāḍu. He had mastery over not only Saṁskṛta but also Tamiḷu and Malayāḷam. He profusely wrote in Saṁskṛta. He did not completely neglect the other two languages in which he conceived a few works. He might have planned to write commentaries on all the works encircling *Prasthānatraya* in Malayāḷam and completed commentary on *Bhagavadgītā* in that language. What prevented him to treat other two viz., *Śārīraka-mīmāṁsā-(Brahma)sūtra* and *Upaniṣads* in the same fashion we can not say.

AŚ proudly announces his belonging to the family lineage of the famous Appayyadīkṣita. But he didn't become versatile writer like the latter. His gaze was firmly affixed to Vedānta.

## 3. The name of the author

Appayaśivācārya(AŚ) had another name, Appayyadīkṣita.Actually, there were so many authors who bore the name Appayyadīkṣita in the

family of Appayyadīkṣita, the famous author of *Kuvalayānada* etc. Our author calls himself "Appayaśivācārya" in colophons in some of his works and "Appayyadīkṣita" in others[1].So it is obvious that the both names indicate the same author.

## 4.The works by the author

Broadly, AŚ's works can be divided into five

---

1.Colophon of *Guruśiṣyasaṁvāda*:

इति श्रीमदप्पय्यदीक्षितेन्द्रान्वयजस्याप्पयदीक्षितस्य कृतिषु गुरुशिष्यसंवादः समाप्तः।

At the end of *Parāśaradīpikā*:

श्रुतिशिरसि नित्यं यस्य निष्ठा वरिष्ठा
गलितनिखिलपाशो योऽमनस्को गृहस्थः।
स्फुटतरमुपदिष्टं येन तत्त्वं स्वतस्त्वं
नम इह गुरवे श्रीसुन्दरेशाय नित्यम् ।।

At the end of *Varāhopaniṣadbhāṣya*:

यद्वक्त्रामृतभानुनिःसृतमहावाक्यामृतं प्रत्यहं
कर्णाभ्यामहमादरेण सुतरां पीत्वा कृतार्थोऽभवत्।
एवं यत्कृपयैव साधु रचिता लोकोपकाराय च
व्याख्येयं गुरवे नमोऽस्तु सततं श्रीसुन्दरेशाय नः।।

Ibid colophon:

इति श्रीमत्सुन्दरेश्वरतातशिष्याप्पयशिवाचार्यकृतौ वराहमञ्जूषायां पञ्चमोऽध्यायः।

groups:I.Works on Prasthānatraya, II. Independent monumental work*Anubhūti-mīmāṁsā-bhāṣya* III. Independent compendia, IV.*Bhagavadgītā-bhāṣya* in Malayāḷam and V.Digests in Malayāḷam and Tamiḷu.

Among his works, *Adhikaraṇakañcuka* , a commentary on a portion of *Gurujñānavāsiṣṭha* was printed at *Sarasavatīmudrākṣaraśālā* in the year 1882(Telugu script).Two tiny works namely *Pañcadaśāṅgayogaprakaraṇa*, and commentary on *Advayatārakopaniṣad* are edited by Vidvan N.S. Venkatanathacharya and published from ORI, Mysore. AŚ's own *Anubhūti-mīmāṁsā-sūtra* is edited by the present editor and published at *The Mysore Orientalist* No.XVIII[1]. It appears that *Guruśiṣyasaṁvāda* was once published at Tirunelvelli in Grantha or Telugu . Potter's *Encyclopedia of Indian Philosophies* mentions a printed edition of*Anubhūti-mīmāṁsā-bhāṣya*.The present editor could not trace the edition so far. No other work of AŚ is published anywhere. All the works are remaining in mss. at ORI Mysore and Adyar Library, Adyar.The main script used in these mss. is Grantha.A few are in Telugu, Malayāḷam and Tamilu.

1.Now it is appended at the end of the present work.

2

Since mss. of AŚ's at ORI, Mysore are in dilapidated condition, publishing all these works in readable manner as soon as possible is a must.

A glance on mere titles of AŚ gives an idea his profundity of Vedāntic knowledge (The numbers indicate the no.s of mss., ORI., Mysore.).

**I.On *Prasthānatraya*:**

1-108.*Upaniṣadbhāṣya*s B.408-414, B.245,B.246 .447, A 166, A167,B.247, P.1227, B.244, P.132,B.327-328

109.*Bhagavadgītābhāṣya* B.240

110.*Brahmamīmāṁsābhāṣya*.235,B.237, B238, B.239/2

111.*Adhikaraṇakañcuka*[1]

**II.Independent monumental work:**

112.*Anubhūtimīmāṁsābhāṣya* (A very detailed and in-depth analysis of 108 *Upaniṣad*s.) B.847,A.168,B.235, B.237, B.238,B.239

**III.Commentary on Purāṇa:**

113.*Bhāgavatavyākhyāna* B.236

**IV. Independent compendia:**

114.*Kāntimatyekaślokī* B.241

---

1.Part of *Gurujñānavāsiṣṭha.* See page no.30

115.*Kaivalyasādhana* B.332,B.333
116.*Guruśiṣyasaṁvāda* A.169,C.448
117.*Tattvasaṅgraha* B.239, B.243
118.*Niṣṭhānubhūti* B.329
119.*Pañcadaśāṅgayogaprakaraṇa* B.236
120.*Parāśaradīpikā* B.306
121.*Bhāgavataikādaśaskandhavyākhā*
B.236
122.*Mantrānuṣṭhānakrama* B.329
123.*Yogasārasvata* C.449
124.*Vedāntayuddhaprakaraṇa* C. 450, C.452
125.*Vedāntavyavahāramālā*C.451, C.453
126.*Śukajanakasaṁvāda* A.237
127.*Śoḍaśamañjarī* B.1310 *Drāviḍasūtra*
128.*Śoḍaśamālikā* B.241
129.*Hariharabrahmasāmarasya* B.241

## V. *Bhagavadgītābhāṣya* in Malayāḷam:

130.*Bhagavadgītābhāṣya* A.237

## VI. Digests in Tamiḷu and Malayāḷam:

131.*Upadeśatattvam* (Tamiḷu) A.237
132.*Jīvacintāmaṇi*(Tamiḷu) B.334
133.*Drāviḍasūtra*(Tamiḷu) B.242
134.*Muktikāmadhenu*(Tamiḷu) B.242
135.*Muktiratna*(Tamiḷu) B.242
136.*Yogadarpaṇa* (Tamiḷu) B.242

137.*Vedāntaprakaraṇa*(Malayāḷam)A.273
138. *Śivaprakāśakaṭṭaḷai*(Malayāḷam)A.237
139.*Svānubhūti* (Malayāḷam)B.270

**VII.**140.***Gurujñānavāsiṣṭha***(See next section).

AŚ's some more works may be obtained by making field work at Tirunelvelli.

## 5.*Gurujñānavāsiṣṭha*

A work namely *Gurujñānavāsiṣṭha* which strongly advocates *Dvaitādvaita* while summarizing all the 108 *Upaniṣads* is printed in Telugu characters and published at Ādisarasvatīnilaya in the year 1882. It has three *Khaṇḍas*. But the present editor has seen only first *Khaṇḍa*, namely *Jñānakhaṇḍa*. The work is totally different from the well known *Jñānavāsiṣṭha* or *Yogavāsiṣṭha*. This *Gurujñānavāsiṣṭha* is not referred to in any philosophical or non-philosophical work. The work is edited by one Pattamaḍai Appayyadīkṣita. A statement in the very first page introduces the work in the following long sentence:

''ईशावास्यादिमुक्तिकान्ताष्टोत्तरशतोपनिषत्सारांशगर्भिते सद्यो-मुक्तिक्रममुक्तिजीवन्मुक्तिविदेहमुक्तिकारणीभूतज्ञानकाण्डोपासना-काण्डकर्मकाण्डाख्यकाण्डत्रयमण्डिते स्थूलसूक्ष्मकारणतुरीयभेदेन द्वादशभेद-

वत्रिपाद्ब्रह्माभिव्यञ्जकद्वादशपादशोभिते एकैकपादस्य पञ्चविंशत्यध्याय-मण्डिते स्वगतश्लकसहस्रादौ गायत्र्या एकैकमक्षरमलङ्कुर्वच्चतुर्विंशति-सहस्रश्लोकोपेते श्रीदक्षिणामूर्तिब्रह्मसंवादात्मके श्रीवसिष्ठमहर्षिणा लोकानुग्रहार्थं तारकब्रह्मावतारश्रीरामचन्द्रं निमित्तीकृत्योपदिष्टे तत्त्वसारायणे प्रबलतरे ब्रह्मविष्णुरुद्रादिसकलदेवताराध्ये जन्मान्तरसहस्रार्जितानेकपुण्यराशिलभ्ये धर्मादिचतुर्विधपुरुषार्थप्रदे दर्शनस्पर्शनपूजनपठनश्रवणश्रावणादिकान्यतममात्रेण नित्यमङ्गळप्रापके गुरुज्ञानवासिष्ठे ज्ञानकाण्डः निखिलाध्येतृजनानामानन्दाप्तये चतुरधिकशतग्रन्थनिर्मातृभिः श्रीमदप्पयदीक्षितैः प्रणीतयाऽधिकरण-कञ्चुकाख्यसूत्रार्थविवृत्त्या साकं श्रीपत्तमडैग्रामनिवासिना श्रीमदप्पयदीक्षितेन नानादेशानीतानेकग्रन्थावलोकनपूर्वकं सम्यक् परिशोधितः।" These adjectives clearly indicate that the topics covered in *Guruśiṣyasaṁvāda* and *Gurujñānavāsiṣṭha* are almost same.

In this work, some sages ask Vasiṣṭha philosophical questions in the beginning. Even though Vasiṣṭha is *Jīvanmukta* , considering his inability to preach them, he approaches Brahmā . Brahmā thinks the first rate guru in this regard is none but Lord Śiva. So, he approaches Śiva with all the sages including Vasiṣṭha. Śiva starts preaching. Most probably the phrase *tārakabrahmāvatāra-śrī-* ***rāmacandraṁ*** *nimittīkṛtya* indicates that Brahmā himself is **Tāraka** and **Śrīrāmacandra.** Why because, the conversations between the sages

like Nidāgha and Ṛbhu, Ajātaśatru and Gārgya are interwoven[1] and Rāma never enters !Another important thing is, what does the word *tattvasārāyaṇe* mean exactly we don't know.

In the *Uttara* no 36, *Guruśiṣyasaṁvāda* refutes *Gurujñānavāsiṣṭha* on the two categories of *Prārabdha*. But why he commentates a portion of the same work , we do not know . The word *Pustaka* in the expression *nānādeśānītāneka-granthāvalokana-pūrvakam* is absent. In Saṁskṛta, the word for manuscript is *pustaka* and not *Grantha*. *Grantha* means work. The use of the word *Grantha* indicates *Upaniṣads* and not copies of *Gurujñāna-vāsiṣṭha* . Now another questions arises: Why *nānādeśānītānekagranthāvalokanapūrvakam* is stated here anyway? NCC does not record any manuscript of *Gurujñānavāsiṣṭha*. Who was behind this specious work ? Was it Pattamaḍai Appayya-dīkṣita or AŚ [2]?

We have already observed opinion of some

1.These conversations resemble the similar conversations seen in *Upanisads*.See *Gārgya-Ajātaśatru-saṁvāda*(in *Bṛhadāraṇyakopaniṣad* 2.1),*Nidāgha-Ṛbhusaṁvāda*(*Tejobindūpaniṣad* chp.s 5 and 6;*Mahopaniṣad*-from chp.3 upto the end) and the like.
2.There is a traditional disease in our country of drag-

scholars that it was *Yogavāsiṣṭha* that inspired the composition of many neo-*Upaniṣads*. In this modern *Vāsiṣṭha*, Rāma (in the form of Brahmā), being asked by Vasiṣṭha tries to clear his doubts in front of Lord Śiva. One may object this kind of naming business and not the philosophical level it reached.

Some of the theories like *bhinnābhinna-nimittakāraṇa*, refutation of *suṣuptabrahman* theory, tripartite nature of Brahman, refutation of eternal Advaita confirms our guess that this work was written by either the author of *Guru-śiṣyasaṁvāda* or his close relative/disciple/friend.

## 6.Anubhavādvaita

The word Anubhavādvaita suggests modified Advaita. It claims of providing very practical Advaita based on experience. Advaita of Śaṅkara is impractical one, it blames. Ever non-duality is not

---

ging names of ancient *Ṛṣi*s to establish antiquity of modern theories. Sometimes even acceptable theories will become unacceptable because of this disease.It is a great mystery why a Vedāntic scholar like AŚ, author of more than hundred works yields on to cheapen deeds.

acceptable according to AŚ. Advaita is possible only in final emancipation and not before that. Practicality lies with duality, AŚ proclaims.

But it cannot enjoy sound logic. How this empirical duality leads one to non-duality and why or how the non-duality (before *saṁsāra*) paved way to duality is not answered satisfactorily in this theory. In simple terms, what is mutual *kārya-kāraṇa-bhāva* of Advaita and Dvaita? Before creation all *Jīva*s are liberated ones and free from *Adhyāsa.* Their bondage in *saṁsāra* is caused by play of God. The author pulls out the *sūtra*, *lokavattu līlākaivalyam* of Bādarāyaṇa to prove his statement . If *Jīva*s get bonded in *saṁsāra* without their desire and consent because of God's play, let the bonded sinners be liberated without their desire because of the same God's play!

Another thing is the AŚ's over emphasis on mingling of *jñāna* and *karman*. Obviously he has fascinated by the traditional injunction, *yāvajjīvam agnihotraṁ juhoti*[1]. But here, it seems he does not use his logical power correctly. In

1.We do not know where exactly it is, in spite of its being quoted repeatedly in vedāntic works .It appears that it is in a *Brāhmaṇa* work.A *Mīmāṁsā sūtra* reminds it(2.4.1).

some cases he resorts on the adage *mahājano yena gataḥ sa panthāḥ*. He considers Śaṅkara's views as *pūrvapakṣa* and his own views belong to *uttarapakṣa* category! Even for the ones who can not read all the 108 *Upaniṣad*s he gives this assurance: Merely by reading *Guruśiṣyasaṁvāda* one gets liberated!

Chiefly AŚ's refutations are on the following:

1.*Traikālikādvaita*(=Nonduality unaffected by the present, past and future), 2. Inessential nature of *Karmakāṇḍa* and 3. Preference of *saṁnyāsin*s to *gṛhastha*s among the Vedāntins who are desirous to have final emancipation.His other refutations of the rationales Śaṅkara brought to view can be safely put aside as they are of lesser value.

His remarkable achievement lies with arranging all the plethora of views piled in original/ imitating *Upaniṣad*s in logical sequence and giving them finishing touch with mother wit. As a result, AŚ could produce *Anubhūti-mīmāṁsā-bhāṣya*, a thesis of very high rank. No doubt he did ascend thrown of superior level which was not thought of by his predecessors .The ones who read *Vedānta*s without resorting on any spiritual practices are guided by preaching of AŚ.

## 7.Influence

In the introductory verses of *Guruśiṣya-saṁvāda* AŚ gives his respects to Appayadīkṣita and his preceptor, Sundareśvara.

Appayadīkṣita is the famous author of more than one hundred woks. His Advaitic works include *Kalpataru* (a sub-sub-commentary on *Bhāmatī*), *Śāstrasiddhānta-leśatātparyasaṅgraha* and the like are well known in the scholarly circle. *Śivārkamaṇidīpikā* is his commentary on *Śrīkarabhāṣya* in *Śivādvaita*. We refrain from giving profile of him as he is too famous to be introduced.

There is an *Advaitacintāmaṇi* by Sundareśvara at ORI, Mysore[1].We are not sure whether the same Sundareśvara was teacher of AŚ.

In this *Advaitacintāmaṇi*, the author concentrates his focus on gathering evidences from Vedānta and logical discussions (according to Navīnanyāya) for establishing Dvaitādvaita. How

1.P.L.3356-Devanāgarī. A653-Telugu. In the Telugu ms. first two pages are missing.Often we meet some lacunae in this ms.

much AŚ had imbibed from Sundareśvara we can not say definitely. AŚ does not use Navīnanyāya jargon anywhere in his works. Even though he might have gathered much information from Sundareśvara, that may be only of Dvaitādvaita and not justification from Navīnanyāya *phakkikā*. It seems that AŚ did not not study Navīnanyāya. Only critical edition of *Advaitacintāmaṇi* will shed more light in this regard.

According to AŚ, both Appayadīkṣita and Sundareśvara opined that in *Kali* era, state of householder is better than that of recluses.

We don't know whether Śaṅkarācārya, being a *saṁnyāsin*, was not liberated according to Appayadīkṣita! If Śaṅkarācārya was not liberated, how would the householders , being followers of him be sure that the state of householders is superior to that of recluses[1] ? If Śaṅkarācārya was liberated according to Appayadīkṣita, the house holders have to agree that the right of recluses to enjoy liberation does exist even in *Kali* era!

We are totally dark about Sundareśvara in this regard. Sundareśvara's *Advaitacintāmaṇi* has

---

1.Appayadīkṣita had married twice!

some references to *Jñānakarmasamuccaya*[1]. But nowhere I could trace his opinion on superiority of householders to recluses.

AŚ's abhorrence towards *saṁnyāsin*s is obvious in his most of the works. Perhaps he might have seen fraudulent *saṁnyāsin*s. But it would not have resulted in deciding that all the *saṁnyāsin*s are of same grade. But AŚ could not put *saṁnyāsopaniṣad*s aside as they are part of *Aṣṭottaraśatopaniṣad*s ! Most probably, non-serious and irresponsible *saṁnyāsin*s are condemned by AŚ. Taking *saṁnyāsa* carelessly is not correct, he opines.

One may rise a query here: Can *gṛhastha*s study and think over spiritual aspects depicted in all the 108 *Upaniṣad*s daily without disturbing their household duties ? Furthermore, is it correct to proclaim audaciously that there is no possibility of *gṛhastha*'s mental deterioration and so, he is supreme among the ones who are desirous of *mokṣa* ?

In order to justify the superiority of house holders, quoting from *Navyopaniṣad*s and *Purāṇa*s and semantically twisting to make them favourable

1.See pages 12-13 (footnote 2) in Skt. introduction.

यदि सर्वमिदं जगच्छुक्तिरजतादिवन्मिथ्येति जानीयात्, यदि च वर्णाश्रम- विधिनिषेधप्रवचनपरः कर्मकाण्डेऽन्याधिकारिविषय इति जानीयात्- तस्य केन वा प्रकारेण शासनं स्यात् ?

तस्माद् विहिताकरणैः प्रतिषिद्धसेवाभिश्च सुतरां सर्वलोकनिन्द्यमानोऽपि ब्रह्मविदसंगात्मज्ञानमात्रेण कृतार्थत्वाद् धन्य एवेत्यसंगात्मज्ञानवादोपपत्तिः।

**उत्तरम्**: ये पुनः श्रोत्रादीन्द्रियेषु तत्तद्विषयव्यापृतेषु मनसि संकल्पादिवृत्तिमत्यपि च ब्रह्मज्ञानिनां न कञ्चन प्रत्यवायं मन्यन्ते तेभ्यो नमो नमः। ते हि महासाहसिका असंगात्मज्ञानेन भर्जितत्वं हि निरङ्कुशमाचक्षते। पद्मपत्रदृष्टान्तस्तु यथापूर्वं विषयासक्तिमिन्द्रियाणां वारयति[१]। विधिनिषेधवर्ज्यावर्ज्यादिप्रतिषेधवचनानि तु श्रुत्यादिगतान्यप्यर्थवादरूपाणीति महान्त आहुः[1]।

ये तु विषयेषु निरङ्कुशं प्रवर्तन्ते, तेषां विषयेभ्यो निवर्तनं हि ब्रह्मज्ञानस्य महिमा[2]। तथा सति कथमुपरि प्रवृत्तिबाहुल्यम् ? न चासूयालुस्तत्र कश्चन भवितुमर्हति सर्वात्मत्वात्। समुच्चयवादपक्षस्तु स्थापित एव। ब्रह्मवित्तद्वरिष्ठयोश्च पक्ष उपपद्यते।

सर्वं जगन्मिथ्येति जानतोऽपि वर्णाश्रमपरः कर्मकाण्डोऽन्याधिकारि-

---

1.अर्थवादशब्दोपन्यासेन पाठकेषु भयजननार्थं प्रयत्नः कृतो ग्रन्थकृता। तदास्तां नाम, "निस्त्रैगुण्ये पथि विचरतः को विधिः को निषेधः?" (शुकाष्टकम्)इति वचनं मुक्तविषयकं न पुनर्मुक्ताभिनयपटुवञ्चकविषयकम्।

2.युक्तिमानयं पक्षः। परन्तु विहिताकरणं प्रतिषिद्धसेवा चेति यत् पदद्वयमग्रे प्रयुज्यते तत् प्रत्युच्यते- विहितं कर्मकाण्डसंबद्धम्। अत्याश्रमिषु तस्य प्रसंग एव नोत्तिष्ठति। प्रतिषिद्धसेवाम् अनुष्ठातारो धूर्ता न

---

१.'पारयति' इति मातृका।

विषय इति जानतोऽपि च तस्य ज्ञानिनः स्वानुभवाभावाच्छासनं सर्वप्रकारेण स्यादेव। विहिताकरणप्रतिषिद्धसेवाभ्यां निन्दा चापरिहार्या स्यात्।

यदि "असङ्गः सच्चिदानन्दः स्वप्रभो द्वैतवर्जितः। अस्मीति शब्दविद्धोऽयं समाधिः सविकल्पकः"(बृ. 4.3.15) इति श्रुत्युक्तशब्दविद्धसमाध्यभ्यासदार्ढ्येन ब्रह्मात्मैक्यापरोक्षानुभूत्या जीवन्मुक्तिपदारूढो भवेत्, तदा तदसंगात्मविज्ञानं निर्दुष्टं स्यात्। तच्च वर्णाश्रमाचारसापेक्षमेव स्वफलं दद्यात्। आविदेहमुक्तेऽर्थे कर्मविधानात्।

एवं सत्यसंगात्मविज्ञानमात्रेणाकृतार्थत्वाद् असंगात्मज्ञानवादानुपपत्तिः।

१४.प्रश्नः: अपि चाम्लेच्छात् सर्वेषामपि ब्रह्मज्ञानाधिकारोऽस्ति। ननु "शुगस्य[१] तदनादरश्रवणात् सूच्यते हि"(ब्र.सू.1.3.34) इति सूत्रेण जातिशूद्रस्य नाधिकार इति चेन्नायं दोषः- वेदपूर्वकस्यैवाधिकारस्य प्रतिषिद्धत्वात्। भाषान्तरेण

पुनरत्याश्रमिणः,प्रतिषिद्धसेवां कर्तॄणामत्याश्रमशब्दभाक्त्वस्य शास्त्र-विरुद्धत्वात्। अत्याश्रमिणंमन्यमानानां लोकजुगुप्सनानि कर्माण्यन्यानि, मुक्तिवार्ता च भिन्ना। तेषां कर्मभिः कथमपराद्धा भवन्ति मुक्ताः? इन्द्रियसङ्गलेशहीनेषु मुक्तेषु दृश्यमाना कादाचित्का कर्मनिष्ठता लोकसंग्रहार्था द्रष्टव्या न पुनः कर्तव्यानुष्ठानार्था। पद्मपत्रदृष्टान्तो गीतायां विस्पष्टमेव कर्मफललेपराहित्यमाह ''ब्रह्मण्याधाय कर्माणि'' इति तत्रैव व्यक्त-मुक्तत्वात्।

ऐतरेयसंबन्धभाष्ये शङ्कराचार्यस्य गिरा सम्यगवधातव्या। आह हि तत्र सः :-''यथाकामित्वं तु विदुषोऽत्यन्तमप्राप्तम्, अत्यन्त-मूढविषयत्वेनावगमात्। तथा शास्त्रचोदितमपि कर्म आत्मविदोऽप्राप्तं गुरुभारतयाऽवगम्यते,किमुतात्यन्ताविवेकनिमित्तं यथाकामित्वम्?''

---

१.'शुभस्य' इति मातृका।

हि तेषामपि हीनजातीनां ब्रह्मज्ञानश्रवणाधिकारसिद्धिरित्याह-न हि षण्णवतितत्त्ववतां जन्मान्तरपापवशाद् हीनजन्मवतामपि जन्मान्तरसुकृतवशादेव नित्यानित्यविवेकादिसाधनचतुष्टयसंपन्नानां मोक्षोपरोधं केनचिदपि कर्तुं युक्तं मनुष्याधिकारसूत्रदर्शनात्। (अनु.मी.3.2.18)[1]

तस्मात् सर्वमोक्षाधिकारवादोपपत्तिः।

उत्तरम्: न ह्यत्र सर्वमोक्षाधिकारवादे काचिदप्यनुपपत्तिरस्ति। तथाऽपि साधनचतुष्टयसंपत्तिरहितानामपि जन्मान्तरानुष्ठितसाधनविशेषान्मोक्षोपपत्तिरिति केचिदाहुस्तदनुपपन्नम्। म्लेच्छादीनां निन्दिताचाराणामपि विवेकादिसाधनसंपत्तिद्वारैव मोक्षसंभवाद् वर्तमानजन्मन्यपि पूर्वानुष्ठितशुभवासनाऽनुवृत्तिसंभवाच्च।

मनुष्याधिकारसूत्रेण(अनु.मी.3.2.18)सर्वेषामपि मनुष्याणां ब्रह्मविद्याधिकारे स्थापितेऽपि भाषान्तरद्वाराऽपि ब्राह्मणमुखादेव श्रोतव्यमिति विधिमुल्लङ्घ्य शूद्रमुखाच्छृण्वतो मोक्षासिद्धेस्तमपेक्ष्य सर्व[मोक्षा]धिकारानुपपत्तिः[2]।

1.ग्रन्थकृतैव रचितयोरनुभूतिमीमांसासूत्रतद्भाष्ययोः परामर्शः कृतोऽत्र। "मनुष्यस्त्वाचार्यो मोचकप्रदत्वात् प्रत्यक्षत्वाच्च "इति सूत्रम्। तत्रत्ये भाष्ये रुद्र एव मनुष्याणां गुरुरित्याशङ्क्य रुद्रस्याप्रत्यक्षत्वात् मनुष्याणां कैलासगमनासमर्थत्वाच्च मनुष्याणां मनुष्या एव गुरव इति सिद्धान्तितं, मनुष्याकारेऽपि गुरौ मनुष्यबुद्धिर्न कार्या प्रत्युत देवबुद्धिरेव कार्येति चोपदिष्टम्। सर्वेषां मनुष्याणां ब्रह्मविद्याधिकार इति विचारो नैव प्रतानितस्तत्र। तस्मात् किमिर्थकमिदम् अकाण्डताण्डवितमिति न ज्ञायते।

2.एकत्र सर्वेषां मनुष्याणां ब्रह्मविद्याधिकारप्रदानाभिनये पाटवं दर्शयति ग्रन्थकृत्, अन्यत्र च ब्राह्मणमुखादेव श्रोतव्यमिति महाभारतीयं सनत्सुजातीयं(उद्योगपर्वणि 41.5)निमीलिननयनोऽनुसरन् द्वाविंश(22) उत्तरे श्रुत्यनुक्ततत्त्वविभागस्योहापोहविचक्षणकल्पनीयत्वस्य स्वोक्तस्य

१५.प्रश्नः किञ्चाद्वैतिनां पक्षे कर्मभक्तियोगोपासनानि न सिद्ध्यन्ति। कथं तर्हि निराकृतपूर्वाणां तेषां सिद्धिरिति चेदुच्यते-परमार्थदशा व्यवहारदशेति हि दशाद्वयमभ्युपगम्यते। तत्र व्यवहारदशायां कर्मादीनां सर्वेषामर्थवत्त्वात्।

तथा हि- ब्रह्मलोकद्वारेण क्रममुक्त्यधिकारे कर्मोपासनादीनां सर्वेषामुपयुक्ततां सूत्रकार आह। तदनुरोधेन द्वैतिनो विशिष्टाद्वैतिनश्च तुष्यन्तु नाम। न तावता सद्योमुक्त्युपरोधोऽस्ति। "अत्र ब्रह्म समश्नुते"(बृ. 4.4.7; क.उ. 6.14.) इत्यादिश्रुतिप्रसिद्धत्वात्।

तस्मादनितरसाधारणकैवल्यमुक्तिमतामद्वैतिनां सर्ववादोपपत्तिः।

उत्तरम्: यद्यप्यद्वैतिभिर्व्यवहारदशा परमार्थदशेति दशाद्वयमभ्युपगम्यते। न तु तन्मते तत् सिद्ध्यति। कुतः ?तेषां त्रिकालाद्वैतवादित्वात्। व्यवहारदशा हि मध्यमकालः। तत्राप्यद्वैतं वदतां कथं कर्मोपासनासिद्धिः? कथं वा ब्रह्मलोकादिसिद्धिः? "अत्र ब्रह्म समश्नुते"(बृ. 4.4.7; क.उ. 6.14.) इत्यादिश्रुतिवाक्यैः[१] केवलं सद्योमुक्तिं वदन्ति न त्वनुभवन्ति। अपरोक्षानुभवार्थकस्य ब्रह्मात्मैक्यध्यानयोगस्यापि तैर्निन्दितत्वात्।

कालत्रयाद्वैतवादेन जीवस्य गन्तुरसिद्ध्या ब्रह्मलोकावाप्तिपूर्विका[२] अननुष्ठानरूपं भीरुत्वं, तत्त्वविभागस्य मनोरुच्यनुसारेण कल्पनरूपं धैर्यं च लोकस्य पुरस्ताद् उपस्थापयति। अपि च, इतिहासपुराणमूलक एव शूद्रस्य ज्ञानाधिकारो न पुनर्वेदमूलक इति वदता शङ्कराचार्येण, भाषान्तरद्वारैव शूद्रस्य ज्ञानलाभप्रयत्नः करणीयो न तु संस्कृतभाषानिबद्धसूत्रभाष्यादिद्वारेति मतं प्रकटयतः प्रकृतस्य ग्रन्थकारस्य दृष्टिसादृश्यमस्मिन्नंशे स्फुटतरम्।

१.'वाक्यभिः' इति मातृकायाम्।
२.'पूर्वका' इति मातृकायाम्।

क्रममुक्तिरपि तेषां न सिद्ध्यतीत्यतः सर्ववादानुपपत्तिः[1]।

**१६.प्रश्नः:** अपि चाद्वैतब्रह्मज्ञानं विना पुण्यपापकारिणां स्वर्गनरकौ भवितुमर्हतः। ननु परिदृश्यमानानामेतेषां लोकानामपि मिथ्यात्वं वदतां पक्षे कथमदृश्यमानयोः स्वर्गनरकलोकयोरस्तित्वसिद्धिरिति चेन्नायं दोषः। सर्वेषामपि लोकानां व्यावहारिकसत्यत्वाभ्युपगमात्। "अयं लोको नास्ति पर इति मानी पुनः पुनः। वशमापद्यते मे"(कठ.1.2.3)इति यमवचनदर्शनाच्च।

तस्मादेवं स्वर्गनरकवादोपपत्तिः।

**उत्तरम्:** यदुक्तं सर्वेषामपि लोकानां व्यावहारिकसत्यत्वाभ्युपगमादिति, तत्रोच्यते। अद्वैतिनां मते व्यावहारिकसत्यत्वं न सिद्ध्यतीत्युक्तपूर्वमेवैतत्। तथाऽपि प्रतिपत्तृसौकर्याय प्रमाणान्तरं च प्रदर्श्यते। "नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्"(ब्र.सू.2.3.21)इत्यत्र हि तद्भाष्यकारेण जीवस्य व्यवहारदशायामपि महत्त्वं प्रसाधितं दृश्यते। सति तु जीवस्य सर्वदा महत्त्वेऽप्यणुत्वसिद्ध्या (ऽणुत्वासिद्ध्या ?) प्रवेशोत्क्रान्त्याद्यसिद्धिरेव प्रसज्यते[2]।

1.कालस्यापि ब्रह्मण्यध्यस्तत्वं ब्रह्मकार्यत्वं च वदता हृदयं न स्पृष्टं ग्रन्थकृता। ब्रह्मणि देशकालादिविशेषवत्त्वं नास्तीति,अविद्योपाधिवशादेव ब्रह्मणि जीवत्वमित्यद्वैतिनः। निवृत्तायामविद्यायां सर्वमपि ब्रह्मैव। 'अहं साधनैरनुष्ठितैरधुना मुक्तोऽस्मि'इत्यपि नानुभवो मुक्तस्य,साधनानां, तदनुष्ठानानाम् 'अधुना' इति कालिकस्य व्यवहारस्य चाविद्यकवात्। मुक्तानामनुभवमवलम्ब्य हि प्रवर्तते वेदान्तशास्त्रम्। न तु "जीवन्मुक्तानामप्युपदेशनार्हता नास्ति, सा तु केवलं शिवाख्यस्य देवताविशेषस्यास्ति" इत्युपदिश्यते वेदान्तशास्त्रे गुरुज्ञानवासिष्ठवत्। (पीठिका-पु.8, Introduction P.29)

2."तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्"(ब्र.सू.2.3.29)इत्यत्र बुद्धिरूपोपाधेर्धर्माणामध्यासपूर्वक एव संसारोऽसंसारिण आत्मन इति व्यक्तमुक्तम्। "इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः।(भ.गी.13.6)"इति स्मृत्युक्ता

एवं "विप्रतिषेधाच्चासमञ्जसम्"(ब्र.सू.2.2.10) इत्याद्यधिकरणेषु सवितृ-देहयोः केवलं तप्यतापकाद्यभ्युपगमेन व्यवहारदशायामपि जीवब्रह्मभेदासिद्ध्या दशाद्वयवचनस्यार्थवत्त्वाभावात् स्वर्गनरकवादानुपपत्तिः[1]।

१७.प्रश्नः तन्तूर्णनाभ्यादिदृष्टान्तानुरोधेन तत्त्वनिरूपणं मन्दाधिकारि-विषयं, मृद्घटादिदृष्टान्तानुरोधेन तत्त्वनिरूपणं मध्यमाधिकारिविषयं,रज्जुसर्पादि-दृष्टान्तानुरोधेन तत्त्वनिरूपणमुत्तमाधिकारिविषयमित्यद्वैतिनामाशयः।

तत्राद्य आरम्भवादो, द्वितीयः परिणामवादस्तृतीयो विवर्तवादः।

त्रयाणामप्येतेषां वादानां श्रुत्यादीनि प्रमाणान्याहुः।

सप्रमाणत्वेऽपि ह्यारम्भवादकारणस्य ब्रह्मणः स्रष्टृत्वादिगुणवशात् "साक्षी चेता केवलो निर्गुणश्च"(श्वे. 6.11)इत्यादिश्रुतिप्रसिद्धं नैर्गुण्यं हीयते। सप्रमाणे च परिणामवादे ब्रह्मण एकत्वात् कृत्स्नप्रसक्तिदोषोऽपरिहार्यः प्रसज्येत।

अतो विवर्तवाद एव निर्दुष्टः।

---

गुणा आत्मनि प्राधान्येन दृश्यन्ते। बुद्धेरुत्क्रान्त्याऽऽत्मन्युत्क्रान्तित्वमुपचर्यते। जीवाणुत्वमौपचारिकं,जीवविभुत्वं पारमार्थिकम्। अत्रार्थे 'वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते। (श्वे.5.9)'' इति श्रुतिर्द्रष्टव्या।

1.समुद्राज्जलात्मनोऽनन्यत्वं,जलाकाराणां फेनबुद्बुदादीनां च परस्परेण भेदः। सत्यपि तेषां परस्परेण भेदे समुद्राभिन्नत्वमेव तेषाम्। तद्वद् भोक्तृभोग्ययोरपि ब्रह्माभिन्नत्वम्, इतरेतरभेदश्च। तथैव च तप्यतापकयोरपि परस्परेण भेदः परमात्मनाऽभेदश्च। अविद्योपाधिवशतो भेदः सिद्ध्यति। परमार्थतस्तु भेदो नास्त्येव। एवमेव स्वर्गनरकादीनामपि स्थितिरद्वैते सिद्ध्यत्येव। ग्रन्थकृता प्रक्षिप्ता आक्षेपाः शाङ्करभाष्याशयानवबोधमूलकाः। ''अविद्याकृतोऽयं तप्यतापकभेदो न पारमार्थिकः।''[शाङ्करं शारीरकभाष्यम्(2.2.10)] ''यत्र यथा दृष्टस्तप्य-तापकभावस्तत्र तथैव स इति न चोदयितव्यः परिहर्तव्यो वा।''।[तत्रैव।]

**उत्तरम्:** सप्रमाणेष्वपि त्रिषु वादेषु विवर्तवादो मन्दाधिकारिविषयः, परिणामवादो मध्यमाधिकारिविषय आरम्भवाद उत्तमाधिकारिविषय[1] इत्यवगन्तव्यम्।

कुतः? स्थूलप्रपञ्चस्य मिथ्यात्वनिश्चयद्वारा विजातीयप्रत्ययान्तरितप्रज्ञावत्त्वात्; अथ सूक्ष्मप्रपञ्चस्य विलयद्वाराऽभ्यासिनस्तस्य सजातीयप्रत्ययप्रवाहात्मकोपासनानिष्ठत्वात् पश्चात् कारणप्रपञ्चस्य विलयद्वारा परब्रह्मारूढस्य तस्य स्वगतभेदवत्त्वाच्च।

न च स्रष्टृत्वेऽपि ब्रह्मणो नैर्गुण्यं हीयते। विष्फुलिङ्गस्रष्टुः पावकस्य पावकत्वाभावाभावात्। नच कृत्स्नप्रसक्तिदोषः स्यात्। "'पादोऽस्य विश्वा भूतानि" (तै.आ.3.12)इत्यादिश्रुत्या ब्रह्मैकपादस्यैव कार्यप्रपञ्चात्मना परिणममानत्वात्।

एवमप्यारूढविषयत्वादारम्भवाद एव निर्दुष्टः[2]।

१८.**प्रश्नः:** ब्रह्म ह्येकमेव वेदान्तप्रसिद्धम्। तस्य तत्पदवाच्यार्थत्वेन शबलतया सगुणेश्वरत्वं तु भ्रान्तिसिद्धमनुवादायोग्यम्[१]। एवं सति कथं तस्य त्रिपात्त्वं वास्तवं स्यात्?

**उत्तरम्:** यद्येकत्वं वास्तवं तदा त्रित्वमपि वास्तवमेव भवितुमर्हति।

1.विवर्तवादादीनां मन्दाधिकार्यादिविषयत्वं यदुक्तं ग्रन्थं रचयित्रा तत्तु यत् किञ्चिदित्युपेक्षणीयं, पामरप्रियत्वात्तस्य।

2.सृष्टेरपारमार्थिकत्वाद् वेदान्तिनः सृष्टिं कर्तरि निहितमनस्का भवन्ति, न तु सृष्टौ। अन्यथा वेदान्तिनां वेदान्तित्वं हीयते, लोकविचारनिमग्नेभ्यः पामरेभ्यस्तेषां भेदराहित्यप्रसंगात्। माण्डूक्योपनिषदि विचारस्यास्य प्रपञ्चो द्रष्टव्यः।

१.'अनुवादयोग्यम्' इति मातृकायाम्।

कुतः? द्वयोरप्येकत्वत्रित्वयोः श्रुतिप्रतिपादितत्वाविशेषणार्धजरतीयस्यान्याय्यत्वात्[1]।

१९.प्रश्नः श्रुतिप्रतिपादितत्वाविशेषेऽपि "तत्र को मोहः कः शोक एकत्वमनुपश्यतः"(ईश.7)इत्यादिश्रुतिभ्य एकत्वदर्शनस्यैव शोकमोहनिवर्तकत्वावगमात् तदेव मुख्यं ग्रहीतव्यम्। अन्यत्तु "बुद्ध्यर्थः पादवत्"(ब्र.सू.3.2.33) इति सूत्रकारेण बोधार्थं कल्पितमित्यभिहितत्वाद् गौणं स्यात्।"यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद् विजानाति स भूमेति भूम त्वेव विजिज्ञासितव्य (छां.उ.7.24.1)इति च भूम्नि ब्रह्मणि द्वितीयदर्शनादीनां प्रतिषिध्यमानत्वात् तस्यैव विज्ञेयत्वाभिधानाच्च तत्त्वं नान्यथा भवितुमर्हति।

"भूमा संप्रसादादध्युपदेशात्"(ब्र.सू.1.3.8)इति सूत्रेण च संप्रसादशब्दोदितात् प्रज्ञाख्यसुषुप्तजीवादुपर्युपर्युपदिश्यमानत्वात् तुर्यं ब्रह्मैव भूमेत्यवगम्यते।

वस्तुनस्त्रिपात्त्वे हि मुख्येऽभ्युपगम्यमाने भूमश्रुतिरुपरुध्येत। न तु न्याय्यं, नानादर्शनस्य दुःखहेतुत्वदर्शनात्।

तस्माद् ब्रह्मण एकत्वमेव वास्तवमिति युक्तम्।

**उत्तरम्:** एकत्वदर्शनेनागामिजन्मनिमित्तशोकमोहनिवृत्तावप्यारब्धजन्मनिमित्तशोकमोहानिवृत्त्या तन्निवर्तकबोधार्थं पादवत्त्वं सूत्रकारेणाभिहित-

1.अत्रापि पूर्ववद् 'एकत्वं मन्दाधिकारिविषयं,त्रिपात्त्वं चोत्तमाधिकारिविषयम् ' इति यन्नाचष्टे महात्माऽयं तत् पुण्याय प्राज्ञानाम्! एकत्वत्रिपात्त्वरूपेण यत् पादवत्त्वं द्विधा श्रूयते श्रुत्यां तत्तु पारमार्थिक्या दृष्ट्या पादवत्त्वराहित्यं परमात्मनः सूचयितुम्।बादरायणोऽपि ''बुद्ध्यर्थः पादवत्'' (ब्र.सू.3.2.33 ) इत्यत्र पादवत्वकल्पना साधकानामुपासनार्थं कृतेति स्पष्टमभाषिष्ट।अर्धजरतीयन्यायस्य स्वमनोरुच्यनुसारं योजनं निर्युक्तकम्।गौणं मुख्यमिति च प्रभेदौ चातुर्येण किमर्थमार्येण सिषाधयिषितौ? तत्रार्धजरतीयन्यायस्य किमर्थं प्रस्मरणम्?

मित्यतस्त्रिपात्त्वं मुख्यमेव स्यात्। न चैतेन ब्रह्मणः पादवत्त्वाभिधानेन भूमश्रुति-रुपरुध्यते। यथा च सप्त च समुद्रा भूमान एव भवन्ति-तथोपपन्नत्वात्। (?)[1]

तुर्यमपि हि ब्रह्म चतुर्धाऽभिधीयते।

शिवतत्त्वसुधानिधौ"तुर्यातीतस्ततोतीत अतीतातीतचिन्मयः"(शिवतत्त्व-सुधानिधिः )इति श्रुत्युपबृंहणानां च पुराणवचनानां बहुशो विद्यमानत्वान्न हेयत्वं शङ्क्यम्। द्वितीयदर्शनादिप्रतिषेधश्च त्रिपात्त्वानुरोधेन निर्विकल्पादिसमाधि-त्रयाभ्यासैरेवात्यन्तिको भवितुमर्हति। अन्यथा प्रथमपादगतैकत्वावगत्या दृष्टदुःख-निवृत्त्यसंभवात्।

1.समुद्रदृष्टान्तस्यायमभिप्रायः-समुद्रत्वरूपधर्मवत्त्वस्य सप्तसु समुद्रेषु निर्विशिषमेव विद्यमानत्वं यथा साधारणं तथा तेषां भूमत्व(महीयस्त्व)-मपि। तद्वदत्रापि सर्वेषु ब्रह्मपादेषु ब्रह्मास्पदवत्त्वं भूमत्व(महीयस्त्व)मुभयं साधारणो धर्मः। वस्तुतस्तु विषमोऽयमुपन्यासः,पादत्वेन प्रसिद्धानां विश्वादीनां भूमत्वाप्रसिद्धेः। न ह्यत्र दार्ष्टान्तिके चत्वारो ब्रह्माणो विवक्षिता यथा दृष्टान्ते सप्त समुद्राः। शिवतत्त्वसुधानिधिवाक्यावष्टम्भेन इष्टापत्तिमत्र दर्शयित्वा साधकानां हृदये भयोत्पत्तये यत् प्रयतितं ग्रन्थं रचयित्रा तत्र पृच्छ्यते-''ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा''(छां.6.8.7)इति श्रुतिः किमर्थं त्यज्यते?यदि ब्रह्मचतुष्ट्वं पुराणाख्यानां नवीनानां ग्रन्थानां बलादुन्नीयते- स्वीक्रियतां पञ्चात्मानो विष्णुसहस्रनामभाष्योद्धृतस्य ''भूतात्मा चेन्द्रियात्मा च प्रधानात्मा तथा भवान्। आत्मा च परमात्मा च त्वमेकः पञ्चधा मतः॥'' इति श्लोकस्यावलम्बनात्। यच्चार्येण एकविंश(21)उत्तरे ब्रह्मचतुष्टयमङ्गीकृतं तत्र पृच्छ्यते-भवतः सिद्धान्ते परममास्पदं किं यत्र चत्वार्यपि ब्रह्माणि स्थितिं प्राप्नुवन्ति? चत्वार्यपि ब्रह्माणि स्वयमेव जगतः परममास्पदमिति प्रतिपादनेऽद्वैतशब्दस्य कोऽर्थः ? लोके संख्यातीतं द्वैतम्। यदि तादृशं द्वैतम् आध्यात्मिकेऽपि जगत्युपलभ्येत सर्वमपि वेदान्तशास्त्रम् उच्छिद्येत।

तस्माद् विश्वतैजसप्राज्ञतुर्याख्यजीवचतुष्टयविलयनार्थं ब्रह्मणः स्वतःसिद्धं चतुष्पात्त्वं वास्तवमिति युक्तम्।

**२०.प्रश्नः:** व्यष्टेः समष्टिजन्यत्वात् विश्वतैजसप्राज्ञाख्यानां त्रयाणामपि जीवानां ब्रह्मविष्णुरुद्राख्येषु त्रिष्वीश्वरेष्वेव विलयो भवितव्यः। सगुणमूर्तिसंपत्तेः सायुज्यमूर्तिरूपत्वेन न कैवल्यमुक्त्यसिद्धिप्रसंग इति शङ्क्यं-जीवतुर्यस्येश्वरतुर्येण निर्गुणब्रह्मणा संपत्तिवशात् कैवल्यसिद्धेः।

न च विजातीयत्वादीश्वरत्रयस्य जीवत्रयविलयाधिष्ठानत्वमनुपपन्न-मिति वाच्यं, मायाऽविद्याप्रतिबिम्बत्वाविशेषेण द्वयोरपि सजातीयत्वात्। अहंग्रहो-पासना च शास्त्रप्रसिद्धा जीवेश्वरयोः सर्वज्ञत्वकिंचिज्ज्ञत्वाभ्यामभिधीयमानमैक्य-विरोधं परिहरति। तस्मात् सगुणेश्वरोपासनमेकमेव मोक्षायालम्। ईशत्रयाभिप्राये-णैव च ब्रह्मणस्त्रिपात्त्वमभिहितमिति कैश्चिदूह्यते।

**उत्तरम्:** पञ्चीकृतप्रपञ्चसृष्टिस्थितिसंहारकर्तारो हि त्रिमूर्तयः। कथं तेषां जीवत्रयजनकत्वं स्यात्? ये तु हिरण्यगर्भसूत्रान्तर्यामिसंज्ञा ईशाः प्रसिद्धा-स्तेषामपि जाग्रत्स्वप्नसुषुप्त्याख्यावस्थात्रयधिष्ठानत्वेन तदभिमानिजीवत्रयाधिष्ठान-त्वानुपपत्तेः।

ये पुनरन्ये विराट्स्वराट्सम्राडाख्याः प्रसिद्धास्त एव ब्रह्मणस्त्रयः पादा इति युक्तमवगन्तुम्। तेषामेव जीवत्रयसमष्टित्वादैक्यमुपपद्यते।

न चाहंग्रहोपासना सर्वज्ञत्वकिञ्चिज्ज्ञत्वविरोधं परिहर्तुं शक्नुयात्। एकोपाधिप्रतिबिम्बत्वाभावेन साजात्याभावात्। प्रतिबिम्बस्य चोपाधिनाशाद् बिम्बे लयो दृष्टो न तु प्रतिबिम्बान्तरे।

तस्मादीशत्रयोपासनमैहिकामुष्मिकभोगार्थं, ब्रह्मत्रयोपासनं कैवल्य-मोक्षार्थमिति युक्तम्।

२१.प्रश्नः: ननु "ईक्षणादिप्रवेशान्ता सृष्टिरीशेन कल्पिता। जाग्रदादि-विमोक्षान्तः संसारो जीवकल्पित"(वराह.उ.2.54)[1]इति श्रुतेः, "अनेन जीवेनाऽऽ-

---

1. श्लोकोऽयं पञ्चदश्यां त्रिवारमायाति।(6.213,7.4,8.31)
नवीनायां वराहोपनिषद्यस्य प्राप्तेरिदं ज्ञायते यदेषा वराहोपनिषत् पञ्चदशीकारसमयादर्वाचीनतरेति। रामकृष्णरचितायां व्याख्यायां वराहोपनिषदोऽपरामर्शोऽत्र प्रबलं प्रमाणम्। रामकृष्णरचितेयं व्याख्याः-

6.213: "- 'स ईक्षत लोकान्नु सृजा'(ऐ.1.1.1)इत्यादिकया 'एतया द्वारा प्रपद्यत'(ऐ.1.3.12)इत्यन्तया श्रुत्या प्रतिपादिता सृष्टिरीश्वरकर्तृका। 'तस्य त्रय आवसथाः'(ऐ.1.3.12)इत्यादिकया 'स एतमेव पुरुषं ब्रह्म ततमपश्यत्।'(ऐ.1.3.13)

7.4 "तदैक्षत बहु स्यां प्रजायेय"(छां.6.2.3 )इति श्रुतमीक्षणादि यस्याः सा ईक्षणादिः। 'अनेन जीवेनात्मनाऽनुप्रविश्य' (छां.6.3.2)इति श्रुतः प्रवेशोऽन्तो यस्याः सा ईक्षणादिः। 'अनेन जीवेनात्मनाऽनुप्रविश्य'(छां.6.3.2)इति श्रुतः प्रवेशोऽन्तो यस्याः सा प्रवेशान्ता ईक्षणादिश्चासौ प्रवेशान्ता चेति पश्चात् कर्मधारयः। सेयं सृष्टिरीश्वरेण कल्पिता। जाग्रदादिर्यस्य संसारस्यासौ जाग्रदादिः विमोक्षो मुक्तिरन्तो यस्य स विमोक्षान्तः संसारो जीवेन कल्पितः। तदभिमानित्वाज्जीवस्येत्यर्थः। ते जाग्रदादय इत्थं श्रूयन्तेः- "स एष मायापरिमोहितात्मा शरीरमास्थाय करोति सर्वम्। स्त्रियन्नपानादिविचित्रभोगैः स एव जाग्रत्परितृप्तिमेति। स्वप्नेऽपि जीवः सुखदुःखभोक्ता स्वमायया कल्पितविश्वलोके। सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति। पुनश्च जन्मान्तरकर्मयोगात् स एव जीवः स्वपिति प्रबुद्धः। पुरत्रये क्रीडति यश्च जीवस्ततस्तु जातं सकलं विचित्रम्। जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं यत् प्रकाशते। तद् ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते (कै.उ.1.12)इति।" (अग्रिमे पुटे....)

त्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि"(छां.6.3.2)इति श्रुतेश्च पर्यालोचने स्रष्टुरीश्वरस्यैव जीवरूपेणानुप्रवेशोऽवगम्यते। एतेन जीवेश्वरयोरेव कार्यकारणत्व-दर्शनादीश्वरतादात्म्यरूपिणी सगुणसायुज्यमुक्तिरेव जीवस्य भवितुमर्हति। न तु निर्गुणब्रह्मतादात्म्यरूपिणी कैवल्यमुक्तिरिति नियमोऽस्ति। सायुज्यात् परमन्यत् कैवल्यमिति प्रमाणाभावात्। नैर्गुण्यं च सगुणेश्वरस्य प्राकृतगुणरहिततयोपपद्यते। अप्राकृतानन्तकल्याणगुणवत्तया हि परमेश्वरस्य सर्वलोकाराध्यमानत्वं सुप्रसिद्ध-मस्ति। यदि यः कश्चिदपि प्राकृतगुणस्तस्मिन् भवेत्ततो न कोऽपि तमाराधयेत्।

तस्मात् प्राकृतगुणरहित एवेश्वर इति।

**उत्तरम्:** न हि जीवचतुष्टयमीश्वरचतुष्टयं ब्रह्मचतुष्टयं च वदन्तीर्विशेष-श्रुतीर्विदितवतो भवतो जीवैक्यमीश्वरैक्यं ब्रह्मैक्यं च वदन्तीषु सामान्यश्रुतिषु परिभ्रमणमुपपद्यते। जीवेश्वरब्रह्मणां त्रयाणां च स्थूलसूक्ष्मकारणतुर्यत्वेन चातुर्विध्यं माण्डूक्यादिश्रुतिप्रसिद्धमिह प्रपञ्चितपूर्वं च।

यथैकत्ववादिनीः श्रुतीरुपेक्ष्य चातुर्विध्यवादिनीनां श्रुतीनां विशेषत्वं भवति, तथा चातुर्विध्यवादिनीर्माण्डूक्यादिश्रुतीरुपेक्ष्य[१] जीवादिषोडशत्ववादिनीनां नारदपरिव्राजकादिश्रुतीनां विशेषत्वं भवति। बुद्धिमतां च सामान्यश्रुतीरुपेक्ष्य[२] असकृदुपर्युपरि विशेषश्रुत्यर्थपर्यालोचनमेव लक्षणम्।

---

**8.69.** अयमेव श्लोकोऽल्पीयसा पाठान्तरेण पुनः पठितो यथा- "ईक्षणादिप्रवेशान्ता सृष्टिरीशकृता भवेत्। जाग्रदादिविमोक्षान्तः संसारो जीवकर्तृकः।" अत्र व्याख्या केवलमन्वयानुसारिणी, विशेषलेशेनापि शून्या च।

---

१. 'श्रुतीरपेक्ष्य' इति मातृकायाम्('श्रुतीनामपेक्षया' इत्यभिप्रायो वा?)।

२. 'श्रुतीरपेक्ष्य' इति मातृकायाम्('श्रुतीनामपेक्षया' इत्यभिप्रायो वा?)।

सायुज्यात् परमन्यत् कैवल्यं च मुक्तिकोपनिषत्प्रमाणकमेव। तथा हि- "चतुर्विधा च या मुक्तिः मदुपासनया भवेत्। कैवल्यमुक्तिरेकैव पारमार्थिकरूपिणी" (मु.उ.1.25)इति ।

न च सगुणेश्वरस्य प्राकृतगुणराहित्यं भवितुमर्हति, प्रकृतिकार्यभूतमाया-प्रतिबिम्बत्वात्।

**२२.प्रश्नः:** ननु वराहोपनिषदि षण्णवतितत्त्वान्युच्यन्ते तेषु केषांचिदेवा-वस्थात्रयं जीवत्रयमीशत्रयमित्यादितत्त्वानां षोडशत्वोपपादनं [नारद]परिव्राजका-द्युपनिषत्सु दृश्यते नेतरेषाम्। केचित्तु लोके पण्डितंमन्यमानाः श्रुत्युक्तानामपि तत्त्वविभागान् स्वकपोलकल्पनमात्रेण यथेच्छमाचक्षते। तन्न्याय्यं न वेति संशीयते। अत्र निश्चयो भवन्मुखादेव मम भवितव्यः।

**उत्तरम्:** श्रुतिभिराचार्यैर्वा तत्त्वविभागस्य कर्तव्यत्वे दिङ्मात्रं प्रदर्श्येत। तदनुसृत्योहापोहविचक्षणैः शिष्यैर्यथोचितं श्रुत्यनुक्तानामपि तत्त्वविभागानां तत्र तत्र समन्वयः क्रियेतैव। न तत् स्वकपोलकल्पनदोषार्हं स्यात्। त एव च पण्डित-तमाः स्युः। तदेव च कल्पनं स्वानुभूतिविजृम्भणसूचकं न्याय्यम्।

तस्मान्न तेषु बुद्धिमतामग्रगण्येषु श्रुत्यनुक्तवादित्वादिदोषः स्वप्नेऽपि चिन्त्यः[1]।

---

1. एतत्तु सत्यमेव। परन्त्वनुभवस्यैव प्राधान्यं वेदान्ते, न पुनः केवलस्य अभ्यूहजन्यस्य शब्दविस्तरस्य। तस्माच्चित्तविक्षेपकरीणाम् ''ऊहापोह-विचक्षणत्व'' मात्रविवर्धिनीनां कल्पनाशृङ्खलानां सृजनापेक्षया अनुभव-दृष्ट्या प्रशस्ततमस्य औपनिषदस्याभिप्रायस्य मुख्यत्वनिर्धारणा करणीया। अर्धजरतीयन्यायः, गौणमुख्यत्वकल्पनेत्यादिनानाचातुर्यैर्वेदान्तिन उपनिषदुक्तानां मन्त्राणां समन्वयं सिषाधयिषवः युक्त्या प्रौढान् विचारान् कुर्वन्तीति प्रसिद्धम्।

सर्वमेकमिति व्यवहारदशायां कोऽप्यवगच्छति। सर्वत्राविशेषेण प्रयुज्यमानस्य पदस्य परमार्थदशासूचकत्वात्।

तस्माज्जीवविषयकव्यावहारिकैक्यवादिन्यः सर्वाश्च श्रुतयः सामान्या वेदितव्याः।

ननु विश्वाख्याज्जीवात्तैजसाख्यो जीवोऽन्यश्चेत् स्यात्, कथमन्यस्योदन्तमन्यो जानीयात् ? न हि लोके कस्यचिदभिसन्धिमन्यो जानातीति चेन्नैष दोषः, द्वयोरप्येकस्थूलदेहवर्तित्वात्। स्थूलदेहद्वयवत्त्वं ह्यन्याभिसन्ध्यज्ञाने कारणम्।

अतोऽनवद्यम्[1]।

२४.प्रश्नः: स्वामिन् ! गृहस्थाश्रमिणः सर्वथा ब्रह्मज्ञानं नोदेतीति प्रतिभाति। कुतः-वैराग्यस्य साधनस्यावश्यकत्वेन विषयनित्यसन्निधिमतस्तस्य वैराग्यासंभवात्। पूर्वे तु वसिष्ठशक्तिपराशरादयो गृहस्था अप्याधिकारिकत्वाद् ब्रह्मज्ञानिनोऽभवन्नित्यतस्तेऽत्र न दृष्टान्ता भवितुमर्हन्ति।

तदन्येषामनधिकारिणां जीवानां गार्हस्थ्ये ज्ञानासंभवात् संन्यासाश्रम-

भिन्नत्वेनानुभूयन्ते, एकस्यैव देवदत्तस्य 'ब्राह्मणोऽस्मि क्षत्रियश्चाप्यस्मि' इत्यनुभवद्वयवत्त्वानुपपत्तेः। दार्ष्टान्तिके तु 'योऽहं स्वप्नमद्राक्षं सोऽहमिदानीं जागर्मि' इति एकस्यैव स्मृतिरनुभवश्च।

1.वराहोपनिषद्युक्तस्य अवस्थात्रयस्याधारेण (''अवस्थात्रितयं चैव जाग्रत्स्वप्नसुषुप्तयः'' व.उ.6) साग्रहमत्र जीवत्रैविध्यवादः सिषाधयिषितः। वस्तुतस्तु अवस्थात्रितयं वस्तुसदित्येव क्लिष्टा कल्पना, तदङ्गीकारे मदमूर्छाद्यवस्थानामपि वस्तुसत्त्वाभ्युपगमप्रसंगः। स्पप्ने जागर्तौ च ज्ञातृज्ञेययोर्भेदभानं, सुषुप्तौ च तदभावः। आत्मनः साक्षित्वात् कस्या अप्यवस्थायास्तस्य च संबन्धो नास्ति। अविद्योपाधिवशात् स्वप्नस्य स्मरणम् इव जागर्तौ प्रतिभाति, स्वप्नजागर्त्योः समानकालप्रवाहस्याभावादिति तु परिशुद्धा वेदान्तमर्यादा।

२३.प्रश्नः नन्वेक एवात्मा मन्तव्यो जाग्रत्स्वप्नसुषुप्तिषु ।"धामत्रय-व्यतीतस्य पुनर्जन्म न विद्यते"(ब्रह्मबिन्दु.उ.11)[1] इत्यादिश्रुतिभ्यः अवस्थात्रयेऽप्यात्मैक एवाभिधीयते। न चानुभवे जीवत्रैविध्यं दृश्यते जाग्रदवस्थायां तैजसप्राज्ञ-व्यापाराभावात्,स्वप्नावस्थायां विश्वप्राज्ञव्यापाराभावात्,सुषुप्त्यवस्थायां विश्वतैजस-व्यापाराभावाच्च। अहमेव च स्वप्नमद्राक्षं सुप्तोऽभूवमिति प्रतिबुद्धो जानाति।

कथं तर्ह्येकस्य विश्वादिसंज्ञात्रयभेद इति चेन्नायं दोषः। जाग्रदाद्यवस्थात्रय-भेदाद् भेदोपपत्तेः। एकोऽपि हि मनुष्यः पर्यायेण विविधवेषग्रहणैर्विविधसंज्ञावान् भवति। कैवल्योपनिषदि चैकस्यैवात्मनोऽवस्थात्रयवत्त्वमवगम्यते-

"स एष मायापरिमोहितात्मा शरीरमास्थाय करोति सर्वम्। स्त्रियन्न-पानादिविचित्रभोगैः स एव जाग्रत्परितृप्तिमेति। स्वप्ने तु जीवः सुखदुःखभोक्ता स्वमायाया कल्पितविश्वलोके। सुषुप्तिकाले सकलेऽवलीने तमोऽभिभूतः सुखरूप-मेति। पुनश्च जन्मान्तरकर्मयोगात् स एव जीवः स्वपिति प्रबुद्धः"(कै.उ.1.12 ) इति।

उत्तरम्: धामत्रयव्यतीत एवैकः स्यात् कारणत्वात्। एतरे तु जीवास्त्रय एव कार्यत्वात्, नामरूपभेदाच्च। न चैकस्यामवस्थायामन्ययोर्व्यापाराभावेऽपि स्वरूपा-भावो वाच्यः। पुनरुत्थानदर्शनेन तिरोहितस्वरूपत्वात्। जीवत्रैविध्येऽभ्युपगम्यमान एव षण्णवतितत्त्वसंख्या पूर्यते। अन्यथा जीवैक्याभ्युपगमे चतुर्णवतिसंख्या[नुप]-पत्तेः। न च 'अहं ब्राह्मणोऽहं क्षत्रियोऽहं वैश्य' इत्यत्र त्रिष्वप्यहंपदैक्येन जात्यैक्यं भवति[2]; नापि देहादिषु परब्रह्मान्तेषु सर्वेष्वपि बहुषु विकारेषु प्रसिद्धेनाहंपदेन

---

1.एष श्लोकः पञ्चदश्यामनूदितः।(7.214 उत्तरार्धम्।) 'धाम'शब्द-स्थाने 'स्थान'शब्दस्तत्र।

2.विषमोऽयमुपन्यासः। ब्राह्मणत्वादयो धर्मा भिन्नासु व्यक्तिषु

ग्रहणमेव मुमुक्षूणां न्याय्यम्।

उत्तरम्: "ये षण्णवतितत्त्वज्ञा यत्र कुत्राश्रमे रताः। जटी मुण्डी शिखी वाऽपि मुच्यते नात्र संशयः।"(वराह.उ.1.17)इति वराहोपनिषदि चतुर्णामप्याश्रमिणां मोक्षाभ्युपगमान्न गृहस्थस्य विषयसान्निध्येऽपि ब्रह्मज्ञानोदयस्य न विरोधोऽस्ति।

ऐहिकं हि वैराग्यं द्विविधम्:- दृष्टभोगवैराग्यमदृष्टभोगवैराग्यं चेति।

तत्राद्यस्य काम्यकर्मविषयस्योपलब्धिमात्रेण ज्ञानसंभवात्[१]। अन्यत्तु प्रारब्धफलविषयमवश्यमनुभोक्तव्यविधानान्न जीवन्मुक्तेनाप्युपलभ्यम्।

तस्माद् गृहिणोऽपि कामत्यागसौलभ्यान्न संन्यासविधिरावश्यकः।

२५.प्रश्नः यदि भवदुक्तप्रकारेण संन्यासाश्रमो ज्ञानोदयं प्रति न मुख्यसाधनं स्यात्तत ईषणात्रयस्योत्थानस्य[२] श्रुतिप्रसिद्धस्याप्रयोजनत्वं प्रसज्यते। श्रुतिवैयर्थ्यकथनं न सुतरामुपपद्यते। ईषणात्रयपरवशस्यापि यदि ज्ञानमुत्पद्येत, तदा साधनचतुष्टयस्यात्यावश्यकतोत्पादनं वृथैवेत्यतिप्रसंग आपद्यते। तस्मादुचितार्थो वक्तव्य इति।

उत्तरम्: ईषणात्रयेण बाधः संन्यासिन इह न स्यादिति को निश्चयः? भिक्षादिहेतोर्बहिःसंचारकालेषु सर्वेऽपि हि विषयपदार्था इन्द्रियगोचरा अवश्यं भवेयुः। न चेषणात्रयपरवशस्य ज्ञानमुत्पद्येतेत्युच्यते। नाऽपि साधनचतुष्टयानपेक्षाऽस्ति। पूर्वोक्तरीत्या वैराग्यस्यापेक्षितत्वात्। तस्मादुचितार्थसिद्धिरिति विजानीहि[1]।

---

1.कर्मकाण्डविहितानामनुष्ठानेन तदनुगुणं फलमवश्यमुपपद्यते, येन गृहस्थस्य मोक्षप्राप्तिप्रत्याशा दूरोत्सारिता भवति। भिक्षाटनादिकर्माणि

---

१.'ज्ञानं सम्भवात्' इति मातृकायाम्।

२.'त्रयस्युत्थानस्य' इति मातृकायाम्।

२६प्रश्नः: "ज्ञात्वा तं मृत्युमत्येति "( कैव.उ.9)इत्याद्यनन्तश्रुतिभ्यो ब्रह्मज्ञानस्यैव मोक्षसाधनत्वावगमात् तत्सिद्ध्यर्थकविचारः केवलं मुमुक्षुणा कर्तव्यो भवति। तथा सति यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाध्याख्यकाष्टाङ्गयोगाभ्यासविधिरप्रयोजन इति केचिदाहुः।

अन्ये तु केचित् कृतब्रह्मविचारस्यापि योगाभ्यासाभावे ब्रह्मपरोक्षानुभवसिद्धेः सप्रयोजन एव स विधिरित्याहुः। उभयेषामपि श्रुत्यादिबहुप्रमाणसद्भावाद् द्वयोरपि मार्गयोः सप्रयोजनत्वमेव स्यादिति मन्ये।

तथाऽपि पौर्वापर्यचिन्तने महान्मे संशयः।

---

तु नं शास्त्रंविहितानि, यानि क्षुदादिनैसर्गिकधर्मोपशान्त्यर्थकानि। चित्तशुद्ध्यर्थमीश्वरार्पणबुद्ध्या कृतानि तु कर्माणि ज्ञानाङ्गरूपाणि भवितुमर्हन्ति। अन्यदिहावधेयम्। संन्यासो द्विविध एषणात्रयत्यागरूपं पारिव्राज्यं तथा यज्ञोपवीतधारणादिसहितं संन्यसनमिति। भिक्षाद्यर्थे सञ्चारे संन्यासिन एषणाप्राप्तिं प्रति यत् सोल्लुण्ठनमुक्तं ग्रन्थकृता तत्रोच्यते-एषणाया एव मोक्षं प्रति मुख्यहेतुत्वं किमभिप्रैति भवान् ? वैराग्यमेव मोक्षहेतुरिति किल भवान् प्रतिपादयति। कीदृशमिदं वैराग्यं यद् भवतः सम्मतम्? सन्तानोत्पत्त्यर्थं कामुकत्वेन वा यत् क्रियते तदपि वैराग्यकुक्षौ निक्षिप्यतां वा? दृष्टभोगवैराग्यमिति शब्दः किल भवता प्रायोजि पूर्वतनोत्तरे (२४)। तत्र पृच्छ्यते-गृहस्थस्य दृष्टभोगस्य वैराग्यं भवत्येवेति किमेकान्तोऽयम्?तथा सति गृहस्थानां सर्वेषामपि वैराग्यस्य सिद्ध्या संन्यासाश्रमविधिः स्मृत्याद्युपदिष्टो दत्तजलाञ्जलिः स्यात्। दृष्टभोगा अपि गृहस्था वैराग्यगन्धेनापि हीनाः पुत्रपौत्रस्नुषाबन्धुप्रभृतिनिगडिताः कुटुम्बोदधिमग्ना दृश्यन्ते। नीलकण्ठदीक्षितस्तु प्रायो दृष्टभवादृशः सन् ''वेदानधीत्य विधिवन्मीमांसित्वा तदर्थं च। दाराः कर्तव्या इति केनेदं प्रहसनं कथितम्'' (शान्तिशतके पद्यसंख्या ५२) इति श्लोकयति स्म।

**उत्तरम्:** "एकं सांख्यं च योगं च यः पश्यति स पश्यति"(भ.गी.5.5) इत्यादिस्मृतिभिर्ज्ञानयोगयोरैक्यावगमान्न पौर्वापर्यचिन्तानवकाशोऽस्ति। अयं निर्णय उत्तमाधिकारिविषयः। मध्यमाधिकार्यपेक्षया तु विचारजनितज्ञानस्य पूर्वसाधनत्वं निदिध्यासनाख्यस्य ब्रह्मात्मैक्यध्यानयोगस्यापरसाधनत्वं स्यात्। मन्दाधिकार्यपेक्षया तु यमादिसाधनचतुष्टयात्मकहठयोगस्य चित्तशुद्ध्यर्थकतया पूर्वसाधनत्वं ब्रह्मविचारस्यापरसाधनत्वं च भवितुमर्हति, प्रत्याहाराद्युपरितनाङ्गचतुष्टयस्य ज्ञानयोगरूपत्वात्।

एवमधिकारिभेदेन ज्ञानयोगयोः पौर्वापर्यावगमादुत्तमाधिकारिणस्तवैतादृशचिन्ता मास्तु।

**२७.प्रश्नः** रेचकपूरककुम्भकात्मकप्राणायामरूपस्य चतुर्थाङ्गस्य मन इन्द्रियादिसर्वतत्त्वविलयकारित्वात् तदारूढस्य सर्वानर्थनिवृत्तिसंभवात् तदुपरितनप्रत्याहाराद्यङ्गचतुष्टयाभ्यासो नावश्यको भवति।

**उत्तरम्:** उक्तप्रकारकप्राणायामारूढस्यापि मन इन्द्रियादिवृत्तिमात्रस्य विलयः स्यान्न तु तत्तत्तत्त्वानाम्। वृत्तिविलयोऽपि तात्कालिक एव। न च स्वल्पोऽप्यात्मप्रकाशो भवति।

तस्मादुपर्यभ्यास आवश्यक एव।

**२८.प्रश्नः** तर्हि राजयोग इति प्रसिद्धः कश्चन योगो हठयोगादन्यो योगिभिरेव कैश्चिदुच्यते। तत्र मूलाधारस्वाधिष्ठानमणिपूरानाहतविशुद्ध्याज्ञासमाख्येषु-

नीहारधूमार्कानिलानलानां
खद्योतविद्युत्स्फटिकाशशीनाम्
एतानि रूपाणि पुरःसराणि

ब्रह्मण्यभिव्यक्तिकराणि योगः।(श्वे.उ.2.11)

इति श्रुत्युक्तप्रकारकनानाविधात्मज्योतिःस्फुरणसंभवादात्मप्रकाशः सिद्ध्यति। न तेन पुरुषार्थः[१] स्यादिति मन्ये।

कुतः? आत्मन एकरूपत्वादर्शनिन भ्रान्तिजन्यत्वात्, "आत्मा वा इदमेक एवाग्र आसीत्"(ऐ.उ.1.1.1)इत्यादिश्रुतिभ्यो हि नानात्वमात्मनः प्रतिषिध्यते।

तस्मात्तादृशानामपि ज्योतिषां न परमार्थत्वनिश्चय इति।

**उत्तरम्:** न हि तादृशानां ज्योतिषां नानाविधत्वदर्शनमात्रेणापरमार्थत्वं शङ्कितुमर्हसि। तथा द्रष्टुरेवोपरितनवाक्यार्थश्रवणादिभिरखण्डैकाकारज्योतिर्दर्शनसंभवात्।

ये पुनरेनं विविधज्योतिर्मयमात्मानमादावेवोदासते,तेषां वाक्यादिपरिश्रमो व्यर्थ एव।

षट्स्वाधारचक्रेषु यत्र कुत्रापि ध्यानयोगेनात्मानं स्फुटं पश्यन् ह्युत्तमाधिकारी तादृशस्य स्वस्याखण्डनिर्गुणपरब्रह्मणैक्यं श्रुत्वा मननेन निःसंशय एकान्ते ध्यायीत। पर्यवसाने तादृशाखण्डैकज्योतिःस्वरूपानुभवेन जीवन्मुक्तश्च भवेत्।

तस्माद् भ्रान्तिजन्यत्वभ्रान्तिं निःशङ्कं त्यजेति।

**२९.प्रश्नः:** ब्रह्मणो ध्येयत्वाभ्युपगमे मनोवृत्तिगोचरत्वापत्त्या वाङ्मनसाविषयत्वश्रुतिव्याकोपः प्रसज्येत। वृत्तिग्राह्यत्वे घटादिविषयपदार्थेभ्यो ब्रह्मणो न कोऽपि विशेषो भवितुमर्हति। ब्रह्मणो निर्विशेषस्यातीन्द्रियत्वेन निर्विषयत्वमेव सर्वे वेदान्तिन आहुः। तद्वचनानि निराकृत्य ध्यानयोगाभ्यासवन्तमपि मां ते ज्ञानवादिनः परिहसन्ति। बहुशस्तत्कृतप्रश्नानामुचितसमाधानवक्तर्यपि मयि निगूढस्य संशयस्यावाङ्मनसगोचरश्रुतिवैयर्थ्यविषयस्य न निवृत्तिरुपजायते।

---

१.'पुरषार्थ' इति मातृकायाम्।

"यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।आनन्दं ब्रह्मणो विद्वान् न विभेति कुतश्चन "(तै.उ.2.9)इति श्रुतिर्हि बलीयसी।

तस्मात् तदविरोधेन ध्यानयोगस्योपपत्तिर्वाच्येति।

**उत्तरम्**: निर्विशेषं ब्रह्म हि द्विविधम्:-सल्लक्षणमसल्लक्षणं चेति प्रसिद्धम्।तवाप्युपदिष्टपूर्व एवायं भेदः।तद्विस्मृतिर्हि लोके बहुकृत्वः शृण्वता-मप्यविद्यापरवशजनसहवासबाहुल्येनासकृद् भवितुमर्हति।

अतस्तपसा[१] न दोषोऽयं[२] स्यात्।

वेदान्तिनस्त्वाधुनिका "एकमेवाद्वितीयं ब्रह्म"(छां.6.2.1)इत्याद्यद्वैत-श्रुतिमात्रावष्टम्भाः "त्रिपादस्यामृतं दिवि"(छां.3.12.5)इत्यादिश्रुत्युक्तभेदं निरा-कुर्वन्ति।

तदाशयरीत्या ध्येयस्य ब्रह्मणः सविशेषत्वेऽपि श्रुत्याशयरीत्या तस्य निर्विशेषत्वात् तद्ध्यानेनैव नित्यशुद्धबुद्धमुक्तस्वभावपरब्रह्मापरोक्षानुभवसंभवाच्च। तत्परीहासवचनैस्तव चित्तभ्रमो न भवितुमर्हति।

सर्वप्रकारेण तेषामलक्षणब्रह्मवादमात्ररसिकानां जन्मान्तरपापपाश[1]-बद्धानां सहवासादिकं परित्यज्य मद्वाक्यमवलम्ब्य ब्रह्मध्यानं कुरुष्वेति।

**३०.प्रश्नः**: प्रकृत्युपाधिमांस्तुर्यः प्रत्यगात्मा।अविद्योपाधिमांस्तृतीयः प्राज्ञः।बद्ध्युपाधिमान् द्वितीयस्तैजसः।स्थूलोपाधिमान् प्रथमो विश्वः।

अत्र विश्वादीनामुत्तरोत्तरबिम्बत्वेन पूर्वपूर्वप्रतिबिम्बतया जन्यजनकत्वं

---

1.केवलं गालिदानेन कस्यापि सिद्धान्तस्य युक्तिपूर्वको निरासो न सिद्ध्यति।

---

१.'अतस्तवसा' इति मातृकायाम्।

२.'दोषोऽय' इति मातृकायाम्।

च तथैव भवति। एवं सति जन्यस्य जनके विलयः संगच्छते। अनुभवाच्च विश्वस्य तैजसे संपत्तिस्तैजस्य प्राज्ञे संपत्तिश्चावगम्यते। एतद्विपर्ययेणैव तेषामुत्पत्तिक्रमो दृश्यते।

तस्माद् विश्वादीनां चतुर्णां जीवानां ब्रह्मप्रथमपादादिषु क्रमाद्विलय इत्यनुपपन्नम्। यथा दर्पणस्योपाधेर्विनाशे तद्गतस्य प्रतिबिम्बस्य ग्रीवास्थे विम्बे मुखे विलयो भवति, तथोपपन्नत्वात्।

अन्यथा श्रुतियुक्त्यनुभवादिसर्वप्रमाणव्याकोपप्रसंगाच्च।

**उत्तरम्:** उक्तपूर्वसमाधानमेवैतत्[1]। तथापि प्रतिपत्तिदाढर्याय पुनरप्युपन्यस्यते।

यथा मायिनेश्वरेण सृज्यमानस्य बाह्यप्रपञ्चस्य नैमित्तिकप्रलये परमेश्वर एव प्रलयो भवति, तथाऽऽविद्यकेन जीवेन सृज्यमानस्याभ्यान्तरजीवस्य नित्यप्रलये त्वदुक्तक्रमेण प्रलयो भवत्येव। मोक्षात्मके प्रकृतप्रलये तु जीवादीनां पूर्वोक्तप्रकारेण षोडशधा विभागसंभवात् ब्रह्मपादेष्विव प्रलयो भवितुमर्हति। अन्यथा प्रतिबिम्बानामुत्तरोत्तरबिम्बेषु लयावधारणे उत्पत्तिप्रलययोः पौनःपुन्यदोषवशात् सर्वथा[१] मोक्षासिद्धिप्रसंगात्।

मोक्षार्थप्रलयसिद्धये हि ध्यात्रा विशुद्धेन विश्वाख्येन जीवेन ब्रह्मणः प्रथमपादो ध्येयो ज्ञेयो वा स्यात्। न च ध्यातुर्ध्येयादन्यत्र विलयो भवितुमर्हति।

तस्मादुपाधीनां तद्गतप्रतिविम्बानां च ब्रह्मपादेष्विव क्रमाद् विलय इति सिद्धम्।

---

1.द्रष्टव्यमत्र २० संख्याङ्कितमुत्तरम्। ईशत्रयोपासनमैहिकामुष्मिक-भोगार्थं, ब्रह्मत्रयोपासनं कैवल्यमोक्षार्थमित्युक्तमिति तत्र विशेषः।

---

१.'सर्वधा' इति मातृकायाम्।

३१.प्रश्नः: नैमित्तिकप्रलये मायाविना परमेश्वरेण सवेषु प्रपञ्चेषूपसंह्रियमाणेषु स्थूलदेहस्य जाग्रदवस्थाया विश्वाख्यजीवस्य च स्वयमेव विलीयमानत्वात् व्रह्मज्ञानध्यानादिसाधनानपेक्षं सर्वेषामपि जीवानां देहेन्द्रियादिसर्वव्यापारोपरमलक्षणो मोक्षः स्यात्।

उत्तरम्: जतुपिण्डे स्वर्णरेणव इव तदा विलीनानामपि जीवानां पूर्वपुण्यपापबीजभर्जना[१]भावेन पुनः कल्पारम्भकाले परमेश्वरसृज्यमानस्थूलदेहेषु प्रवेशवशात् पूर्ववत् संसारित्वसिद्धेर्न ज्ञानादिसाधनानपेक्षं मोक्षः स्यात्। अतस्तात्कालिकं निर्व्यापारत्वं न मुख्यमवकल्पते।

३२.प्रश्नः: नित्यप्रलयो नैमित्तिकप्रलयो , मूर्छा, उत्क्रान्तिः,सगुणध्यानलयो, हठयोगलयो, मोक्षलय इति प्रसिद्धेषु लयेषु जीवस्य निर्व्यापारत्वसाम्यात् सुखसाम्यं च स्यात्। लौकिकादिसर्वव्यापाररहितो हि पुरुषः सुखमुपलभमानो दृश्यते। विबुधाश्चोपशान्तस्यैव परमं सुखमाचक्षते। येन केन वोपायेन सुखमेव प्रापणीयं सर्वैरभिधीयते। न चैतस्य निर्व्यापारसुखस्यामुख्यत्वं वक्तुं युक्तम्, स्रक्चन्दनवनितादिविषयोपभोगजन्यस्य सुखस्यैव दुःखपर्यवसायित्वेनामुख्यत्वसंभवात्।

तस्मात् प्रदर्शितेषु सप्तविधलयेष्वपि जायमानं सुखं निर्व्यापारत्वाविशेषात् मुख्यमेव स्यादिति।

उत्तरम्: "तमोऽभिभूतः सुखरूपमेति"(उ.13)इत्यादिश्रुतिभ्यः नित्यप्रलयाख्यायां सुषुप्ताविभिधीयमानं सुखं तमोऽभिभूतत्वान्न मुख्यं भवितुमर्हति। "अहरहर्ब्रह्म गच्छन्त्य"(छां.8.3.2 प्र.4.4)इति श्रुतेरवगम्यमानं सुषुप्तस्य

---

१.'भर्त्सना'(!?) इति मातृकायाम्।

ब्रह्मत्वं तु गौणमित्यवोचाम। अन्येषु तु महाप्रलयमूर्छोत्क्रान्तिलयेषु त्रिषु न सुखवार्ताऽपि स्यात्, स्रक्चन्दनवनितादिविषयसुखस्याप्यभावात्। पञ्चमे तु लये तात्कालिकसुखाभावेऽपि सायुज्यमुक्तिसुखं भविष्यति। तथाऽपि कैवल्यसुखाभावान्न तच्च मुख्यं भवितुमर्हति। षष्ठे तु दीर्घायुष्यसंभवेऽपि न सुखलेशोऽपि भवति।

अतः सप्तमो मोक्षलय एव मुख्यं सुखं मन्तव्यम्।

निर्व्यापाराणां सर्वेषामपि सुखमिति वदन्तस्तु न विबुधशब्दार्हा ज्ञान-ध्यानादिजनितोपशान्तेरेव परमसुखहेतुत्वात्।

३३.प्रश्नः: ननु सायुज्यमुक्तिसुखमप्यमुख्यसुखमित्यनुपपन्नम्।

कुतः? परमेश्वरमूर्तौ विलीनस्य द्विपरार्धावसानकारब्धक्षयेऽवश्यकैवल्य-संभवात्। "न च [२] पुनरावर्तते"(छां.8.15.1) इति हि सर्वत्र प्रसिद्धम्। "कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्"(ब्र.सू.4.3.10)इति सूत्रेण चन्द्रमण्डलद्वारा स्वर्गलोकं गताः कर्मिणो हि पुनरावर्तन्त इति प्रसिद्धम्।

सैषा पुनरावृत्तिः कथमेतेषामर्चिरादिमार्गेण सूर्यमण्डलद्वारा ब्रह्म-लोकं गतानामपि वक्तुं शक्यम्? "वेदान्तविज्ञानसुनिश्चितार्थाः" (महा.ना.8.14) इति, "ब्रह्मणा सह ते सर्वे"( ? )इति च श्रुतिस्मृतिभ्यां प्राप्तब्रह्मलोकानां परमपदप्रवेशलक्षणकैवल्यमुक्त्यवधारणान्न केनचिदपि पुनरावृत्तिः शङ्कनीया। सूत्रकारश्च"अनावृत्तिः शब्दादनावृत्तिः शब्दात्"(ब्र.सू.4.4.22) इति पुनरावृत्तिं प्रतिषेधति। भोगस्थानं स्वर्गलोकः,मोक्षस्थानं ब्रह्मलोक इति सर्वविद्वज्जनव्यवहार-श्च प्रसिद्धोऽस्ति।

तस्मादनावृत्तिस्थानमेव ब्रह्मलोक इति मम निश्चयः।

अत्र यः कश्चनाक्षेपोऽस्ति चेत् स भवता सर्वज्ञेन सद्गुरुणा वक्तव्यः।

उत्तरम्: यदि निर्गुणप्रत्यगात्मोपासनावशादर्चिरादिमार्गेण ब्रह्मलोकं

गच्छेत्,न तस्य निष्कामोपासनामहिम्ना कदाऽपि पुनरावृत्तिः स्यात्। सकाम-सगुणोपासकस्य तु प्राप्तायामपि सायुज्यमुक्तौ पुनरावृत्तिः स्यादेव। "आब्रह्मभुवना[१]-ल्लोकः पुनरावर्तिनोऽर्जुन! मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते।"(भ.गी.8.16) इति स्मृतेः। "ब्रह्मादिभुवनं गत्वा पुनर्भूमौ विजायते"(सूतसंहिता )इति सूतसंहिता-वचनाच्चावगम्यमाना सेयं पुनरावृत्तिरेषां सकामसगुणोपासकानामेव मन्तव्या। अन्यथेदृशवाक्यानामानर्थक्यप्रसंगात्। सर्वेषामपि हि श्रुतिस्मृतिपुराणवचनानां गतिः कल्पनीया। सकामोपासका हि ब्रह्मलोकं गत्वाऽपि तत्रत्यैश्वर्यभोगपारवश्येन नित्यानित्यविवेकादिसाधनचतुष्टयराहित्याच्चतुर्मुखकर्तृकतत्त्वोपदेशानर्हा भोगाव-साने पुनर्भूमौ पतन्ति।

यदि ये केचनोपभोगक्षयदर्शनेन तत्रैव निर्विण्णचित्ता मोक्षार्थिश्च परमेश्वरं ब्रह्माणं शरणमुपागमंस्तेषां तदुपदेशद्वारा कैवल्यसंभवान्न तेऽत्र पुनरावृत्तियोग्यतया विवक्षिताः।

**३४.प्रश्नः:** देवयानाख्येनार्चिरादिमार्गेण ब्रह्मलोकस्य गन्तारो हीह वेदान्त-विज्ञानसुनिश्चितार्था भवन्ति। तेषां परोक्षज्ञानित्वेऽपि चतुर्मुखब्रह्मकर्तृकतत्त्वो-पदेशानपेक्षं स्वयमेव तत्र निदिध्यासनवशादपरोक्षानुभवो भवितुमर्हति। अतस्त-ल्लोकवासित्वेनैतेषां तदधीनत्वेऽपि तच्छिष्यत्वाभावान्न तच्छरणागतिर्मुख्या स्यात्।

**उत्तरम्:** इह विज्ञानसुनिश्चितार्थानामपि प्रारब्धदेहपातावसरे मरण-यातनया विस्मृतज्ञानत्वाद् ब्रह्मलोकगमनानन्तरं ब्रह्मकृतोपदेशद्वारैव निदिध्यासनं कार्यम्। यथा पूर्वजन्मन्यभ्यस्तानामपि विद्यानां विकासाय सकृदुपदेशो वाऽवश्य-मपेक्ष्यते। तथोभयथाऽपि ब्रह्मणोऽपेक्षणीयत्वात्तच्छरणागतिर्मुख्यैव[1]।

1.प्रकरणमिदमकाण्डताण्डवितमिव। ब्रह्मलोकं गतस्य "वेदान्तविज्ञान-

१.'भवना' इति मातृकायाम्।

३५.प्रश्नः केचिद् ह्यद्वैतिन आहुः"-न ह्यनध्यस्तात्मभावेन देहेन कश्चिद् व्याप्रियते-"(अध्यासभाष्यम्।)इत्यादिवचनैर्देहेन्द्रियादिकर्तृकस्य व्यापारस्याध्यास-मूलकत्वमस्तीति। त एवान्यत्र "देहेन्द्रियादिव्यापारवानपि निर्मुक्ताध्यासो जीवन्मुक्तो भवती" त्याहुः।

एवमेतेषाम्[१] एवोक्तीनां परस्परविरोधमाशङ्कमाना इतरे द्वैतिनस्तान् अद्वैतिनः परिहसन्ति।

अत्रैष परिहास उपपद्यते न वेति संशये सत्युपपद्यत इति तावत् प्राप्तम्।

कुतः? व्यापारवत्त्वतदभावयोस्तमःप्रकाशयोरिवान्यविरुद्धत्वेन सामाना-धिकरण्या[२]संभवात्।

नहि व्यापारवान् कश्चिदपि मुक्ताध्यासो भवितुमर्हति। न चाध्यास-वत्तं कञ्चिदपि जीवन्मुक्तं कश्चिदाचक्षीत। ब्रह्म हि सर्ववेदान्तप्रसिद्धं निष्कल-निष्क्रियादिशब्दगम्यं निर्व्यापारमेव स्यात्।

तथा सति तदभेदमपरोक्षतोऽनुभवन्निष्कलपरब्रह्मीभूतस्य जीवन्मुक्तः कथं व्यापारवान् भवितुमर्हति?

यद्युच्येत[३], जीवन्मुक्तस्य व्यवहारकाले व्यापारवत्त्वेऽपि समाधिकाले निर्व्यापारवत्वात् कालसामानाधिकरण्याभावेऽप्येकजीवाधिकरणतद्व्यापारतदभावयो-सुनिश्चितार्थं''त्वेऽपि ब्रह्मणि शरण्यभावस्तेन करणीयो वा न वेत्यत्र केनापि मनुष्येण विरचितः कोऽपि प्रकरणग्रन्थः परिशीलनीयो भवतीत्यहो शोचनीयता तेषाम्! योगभ्रष्टानां तु प्रारब्धकर्मवशात् पुनर्जन्म मनुष्यलोके योगिनां कुले स्यात्। नैतद् वेदान्तविज्ञानसुनिश्चितार्थानाम्।

---

१.'एवमेकेषाम्' इति मातृकायाम्। २.'सामान्याधिकरणा' इति मातृका-याम्। ३.'यद्यच्येत' इति मातृकायाम्।

र्न सामानाधिकरण्यानुपपत्तिप्रसंग इति, तदा समाधिकालेष्वविद्यादिपाशमुक्तस्य व्यवहारकालेषु तत्पाशबद्धत्वापत्त्या मुक्तस्यापि पुनर्बन्धप्रसंगान्मुक्त्यर्थकश्रवणादि-प्रयत्नवैयर्थ्यचिन्तया सर्वेऽप्यद्वैतशास्त्राद् वैमुख्यमाप्नुयुः। देहादिव्यापारसूच्यमानः संसारबन्धश्च, व्यवहारकालीनः परमात्मविदोऽपि दुःखं जन्ममरणे चोत्पादयेदेव। श्रुतिस्तु "ज्ञात्वा देवं सर्वपाशावहानिः, क्षीणैः क्लेशैः जन्ममृत्युप्रहाणिः( श्वे.1.11)" इति पाशमुक्तस्य क्लेशजन्ममरणानि प्रतिषेधति। तस्माद् देहादिसर्वव्यापार-रहित एव जीवन्मुक्तोऽभ्युपेतव्य इति।

उत्तरम्: न ह्यागामिमुक्तिप्रारब्धबन्धयोः सामानाधिकरण्योपपत्त्या तमःप्रकाशयोरिवान्योन्यविरोधोऽस्ति। प्रारब्धव्यापारवताऽप्यागम्यार्थकव्यापारा-भावान्मुक्ताध्यासत्ववचनमनुपपन्नम्। अत्रैवं सति व्यापारवत्त्वतदभावयोरन्योन्य-विरोधमुपपादयितुं कः शक्नुयात्? को वा मुक्तस्य पुनर्बन्धप्रसंगमाशङ्क्याद्वैत-शास्त्रविमुखः स्यात्? न हि व्यवहारकालीनः प्रारब्धव्यवहारो दुःखमरणादिहेतुः स्यात्। व्यवहारस्य भर्जितबीजदग्धपटादिवत् प्रतीतिमात्रशरणत्वेन दुःखादिजनकत्वा-नुपपत्तेः। न चागाम्यध्यासनिर्मुक्तं प्रारब्धाध्यासवन्तमप्यजीवन्मुक्तं कश्चिदाचक्षीत।

यदि व्यापारदर्शनमात्रेण सर्वेषामविशेषेण संसारबन्धमाशङ्कीत, तदा "कुर्वन्नपि न लिप्यते"(भ.गी.5.17)इत्यादिजीवन्मुक्तलक्षणवादिनामनन्तानां स्मृत्यादि[१] वचनानां वैयर्थ्यदोषोऽपरिहार्यः प्रसज्येत।

न हि लोके मध्यस्थव्यवहारिणां वादिप्रतिवादिविवादार्हनिमित्तं दुःखं सुखं वाऽनुभूयमानं दृश्यते। नच निर्देशभूतकानामन्यगृहनिर्माणादिव्यापारवता-मपि तत्सिद्ध्यसिद्धिनिमित्तसुखदुःखे भवतः।

जीवन्मुक्तो हि पुरुषः पुत्रमित्रकलत्रक्षेत्रवित्तादिसंसर्गवानपि समाधि-

१. 'श्रुत्यादि' इति मातृकायाम्।

कालानुभूतपूर्वनिर्गुणब्रह्मात्मैक्यानुस्यूतस्मृतिबलेन व्यवहारकालेषु सर्वमिथ्यात्व-निश्चयमविच्छिन्नमुपलभ्य सन्निहितास्वप्यापत्सु धीरतरो भवति[1]।

यदि वाचा केवलम् "अहं ब्रह्मास्मि" इत्युक्त्वाऽऽपदागमनवेलायां शोक-मोहादिपरवशः स्यात्, तदा जगत्प्रतारकोऽयमिति वक्तुं शक्यम्। न त्वेवं जीवन्मुक्त उपलभ्यते।

तस्माद् देहादिसर्वव्यापारवानपि कश्चिन्मुक्तपूर्वापराध्यासो जीवन्मुक्तोऽवश्यमभ्युपगन्तव्य इति।

३६.प्रश्नः. ननु समाधौ निर्विशेषब्रह्मीभूतो जीवस्तत उत्थानं विनैवा-नवरतमतिष्ठेत यदि तदा क्लेशादिकारणीभूतव्यापारानवकाशाज्जीवन्मुक्त इति सर्वेऽपि विश्वसेयुः। न हि कोऽपि लोके तादृशनिष्ठावानुपलभ्यते। न च तादृश एव जीवन्मुक्तो नान्य इति भवतोऽभिमतमस्ति। समाधेर्व्युत्थानव्यापारवतोऽपि जीवन्मुक्तत्वाभ्युपगमात्।

---

1.ग्रन्थकृतोऽयं व्याहारो वदतो व्याघात एव यस्त्रैकालिकमद्वैतं खण्डयति "यदि वर्तमानकालेऽपि तव ब्रह्मैक्यं स्यात्ततः किमर्थोऽयं प्रश्नप्रति-वचनरूप आरम्भः ?किमर्थश्चावयोर्गुरुशिष्यसंबन्धः"(चतुर्थे प्रश्ने पृ.४) इति प्रतिपादयन्। सर्वमिथ्यात्वमविच्छिन्नमिति वदता तेनैव गुरु-शिष्यसंबन्धमोक्षसाधनादिकस्यापि मिथ्यात्वमभ्युपगतम्। अधुना त्रै-कालिकमद्वैतं कया युक्त्या खण्ड्यताम् ? "मिथ्यात्वस्य तु मिथ्यात्वे मिथ्यात्वं बाधितं भवेत्" इति वेदान्तदेशिकादयः पूर्वमेव जगुः। जीवन्मुक्तस्यैव सर्वमिथ्यात्वनिश्चयो न पुनरन्येषामित्यस्माभिः प्रतिपाद्यत इति चेत्, "ज्ञानिन एवास्ति ज्ञानं, न त्वज्ञानिनः" इति पामरेष्वपि वर्तमानाद् ज्ञानात् तदीयं 'निश्चयज्ञानं' कथं भिद्यते ? त्रिपुटीभेदज्ञानं व्यवहारे, त्रिपुटीभेदज्ञाननाशः सुषुप्तौ समाधौ चेति वेदान्तमतम्।

यद्यपि समाधौ निर्विकल्पके सकृत् परमात्मसम्यग्दर्शनमात्रेण मुक्ता-ध्यासत्वात् पश्चाद् भर्जितबीजादिन्यायेन शतशो व्यापारवत्त्वेऽपि नोक्तदोषप्रसंग इति निगद्यते।

तथाऽपि भर्जितबीजादिदृष्टान्तानामद्वैतिप्रोच्यमानानां तदीयान्य - सिद्धान्तबाधकत्वादौपचारिकत्वमेव वक्तुं शक्यम्।

को नामान्यसिद्धान्तः?उच्यते- 'अवश्यमनुभोक्तव्यं कृतं कर्म शुभा-शुभम्' (?)[1]इति, 'प्रारब्धं भोगतो नश्येत्' इति च समाधिव्युत्थितस्यापि व्यवहारकालीनपुण्यपापकर्मणामनन्तरजन्मभिरवश्यभोक्तव्यत्वात्। व्यवहारवतः पुण्यपापे त्ववश्यं[1] सेत्स्यतः। न च प्रारब्धं सद्य एव भुक्त्वा देहपातसमकालं कैवल्यमश्नुवीतेति वक्तुं शक्यम्।

प्रारब्धं हि द्विविधम्- सफलं विफलं चेति गुरुज्ञानवासिष्ठे[2] प्रसिद्धम्।() तत्राद्यस्य सुखदुःखात्मकानुभवस्य सद्य इह भोगेन प्रक्षयसंभवेऽपि जन्मान्तरानुभव-योग्ययोर्द्वितीयारब्धरूपयोः पुण्यपापयोरिह क्रियमाणयोः सद्यो भोगासंभवाज्जीवन्मुक्तस्यापि व्यापारवतः पुनर्जन्मसिद्धिः।

ननु 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यां' (?)[3] इति श्रुत्या जीवन्मुक्तसुहृत्सु तदीयपुण्यपापयोर्विनियोगो ऽवगम्यत इति चेन्नैष

1."कृतं कर्म शुभाशुभम्" इत्येतावान् भागस्तु गर्भोपनिषद्युपलभ्यते, चतुर्थे प्रघट्टके। अवश्यमनुभोक्तव्यमिति पूर्वार्धभागे तत्र "यन्मया परिजनस्यार्थे" इति पाठः।

2.गुरुज्ञानवासिष्ठविषये पीठिका द्रष्टव्या।

3.कुत्रत्यमिदं वाक्यमिति न ज्ञायते। इदं भगवद्गीताया वेङ्कटनाथप्रणी-तायां ब्रह्मानन्दगिरिटीकायामप्युद्धृतम् (८.१० बालमनोरमा प्रेस्,चेन्नै।) अत्र ब्रह्मानन्दगिरिरिति नाम व्याख्याया न पुनर्व्याख्यातुः !

१.'अवश्य' इति मातृकायाम्।

सारः[1]। अज्ञातपुण्यपापयोर्हि परत्र विनियोगः स्यान्न तु ज्ञातयोः। ज्ञात्वैव चाग्निहोत्राद्यनुष्ठानतदभावात्मकपुण्यपापे क्रियेते। यदि ज्ञात्वा क्रियमाणयोरपि परत्र विनियोग उच्येत तदा सर्वेषामपि जीवानां पूर्वपूर्वादि[१] जन्मानवकाशदोषः प्रसज्येत।

यद्युच्येत, कर्मफलवचनार्थवत्त्वभिनिवेशवतां केषाञ्चिदद्वैतिनां दुर्बल सिद्धान्तत्वात् "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा"(भ.गी.4.37) इति ज्ञानमहिमवादिनामितरेषामद्वैतिनां विद्यमानत्वात्तन्मतानुरोधेन सर्वाण्यपि कर्माणि जीवन्मुक्तस्य भोगं विनैव सद्यो विनश्यन्ति "न कर्म लिप्यते नरे" (ई.उ.2)"कुर्वन्नपि न लिप्यते"(भ.गी.5.17)इत्याद्यनन्तश्रुतिस्मृतिदर्शनादिति; नैतदुपपद्यते, दुर्बलसिद्धान्त इति।

न ह्यचेतनत्वात् पुण्यपापकर्मणां सुखदुःखात्मकं फलमुत्पादयितुं न शक्तिर्भवितुमर्हतीति शक्यं संभावयितुम्। चेतनसान्निध्यसत्त्वात्। अन्यथा हि पूर्वजन्मानुपपत्तिः प्रसज्येत। पूर्वमनात्मज्ञत्वेन कर्मणां सत्यबुद्ध्या कृतत्वात्। इदानीमात्मज्ञत्वेन मिथ्यात्वबुद्ध्या क्रियमाणत्वाच कर्मफलसिद्ध्यसिद्धी भवितु-मर्हतः।

तर्ह्यप्रयोजनताबुद्ध्या कर्मसु मिथ्यात्वनिश्चयो नास्तिकानामपि समान इति चेद् बाढं, तथापि तेषामनात्मज्ञत्वं हि कर्ममिथ्यात्वनिश्चयफलप्रति-बन्धकं सदुपरितनजन्मकारणं भवति।

यदि श्रुत्याचार्यप्रसादाभ्यामकर्मात्मानं सम्यगिह जानीयात् स सर्वाण्य-प्यग्निहोत्रादीनि पुण्यकर्माणि कुर्वन्नपि सर्वाण्यपि ब्रह्महत्यादीनि पापकर्माणि कुर्वन्नपि न कदाऽपि संसृज्येत। आत्मज्ञानं विना कर्माण्युपेक्षमाणा हि पापिनो वैवस्वतदण्ड्याः। तेषामिह का प्रसक्तिः ?

1. 'नैतत् सारम्' इति तु सुवचम्, एतादृशेषु प्रयोगेषु सारशब्दस्य नपुंस्त्वात्।

१. 'पूर्वप्रपूर्वादि' इति मातृकायाम्।

ये पुनरकर्मब्रह्मात्मैक्यापरोक्षावगत्या देहाद्यध्यासोन्मुक्ता रज्जुसर्पादिवत् सर्वं मिथ्येति जानन्ति,तेषां देहादिसंयुक्तानामपि देहादिनियुक्तत्वाज्जीवन्मुक्तत्वं निरङ्कुशमवधार्यत इत्येवं कर्मप्रधानजीवन्मुक्तिवादिनो ज्ञानप्रधानजीवन्मुक्तिवादिनश्चाऽन्योन्यविप्रतिषेधदर्शनात् तयोरेकं साधुं विनिश्चित्य सर्वज्ञेन सद्गुरुणा भवताऽनुग्राह्योऽयं जन इति।

उत्तरम्: न हि कोऽपि निर्मुक्ताध्यास इति न वाच्यं[१] सर्वेषामपि जीवानां प्रागुत्पत्तेर्ब्रह्मसामानाधिकरण्यसिद्ध्या निर्व्यापारत्वेन निर्मुक्ताध्यासत्वात्। कुतस्तर्हि प्रागुत्पत्तेर्ब्रह्मीभूततयाऽध्यासरहितानां सर्वेषामपि जीवानां पुनः संसारबन्धागम इति चेत्, "लोकवत्तु लीलाकैवल्यम्"(ब्र.सू.1.2.33)इति ब्रह्मसूत्रोक्तप्रकारेण परमेश्वरलीलयैवावगतत्वात्[1]। तर्हि जीवकृतपुण्यपापात्मकशेषकर्मणां परमेश्वरमूलकत्वान्न जीवानां कर्मफलभोग इति चेन्न, परमेश्वपप्रतिष्ठापितज्ञानकर्मविषयकविधिनिषेधोल्लङ्घनकर्तृत्वेन जीवस्यैव तत्फलोपभोगसंभवात्। यथा हि- प्रागुत्पत्तेः प्रलयानन्तरं चाध्यासराहित्येन जीवो निर्व्यापारः स्यात्, तथा मध्यमकालेऽपि समाधिनिष्ठायां ब्रह्मात्मैक्यवत्तयाऽध्यासराहित्येन निर्व्यापारः स्यादित्यतो व्युत्थायव्यापारवानपि जीवन्मुक्त एवेति सर्वेऽपि विश्वसेयुः।

ज्ञानमहिमवादिनां मतं त्वर्थवादानुरोधि सर्वकर्मदूरत्वान्न शिष्टपरिग्राह्यम्।

यत्त्वितरेषां मतमनुसृत्य प्रारब्धं द्विविधमित्याद्यभिहितं, तत्रोच्यते:-

1.यदि लीलामात्रं सृष्टिः, मोक्षोऽपि लीलामात्रं किमर्थं न भवति? 'संसारबन्धनमवाञ्छतामपि जीवानां परमेश्वरलीलामात्रेण संसारबन्धनम्' इतिप्रतिपादयता मोक्षमवाञ्छतां पापिनामपि परमश्वरलीलामात्रेण मोक्षसंभवोऽङ्गीक्रियताम्। 'जीविनां संसारपतने परमेश्वरो नापराद्ध'इति प्रतिपादनार्थं वेदान्तज्ञानमनावश्यकं, पामराणामपि तत्र शक्तत्वात्।

१.'वाच्या' इति मातृकायाम्।

विफलप्रारब्धमपि जीवन्मुक्तः सद्य एव भुक्त्वा क्षपयेदिति। न च भर्जितबीजादि-दृष्टान्तानाम् औपचारिकत्वं वक्तुं युक्तम्। तद्व्यापाराणां भर्जितबीजसादृश्ये सति सद्यः फलजनकत्वं वा स्यादिति चेन्नैष दोषः। "शास्त्रेण नश्येत् परमार्थदृष्टिः कार्यक्षमा नश्यति चापरोक्ष्यात्। प्रारब्धनाशात् प्रतिभाननाश एवं त्रिधा नश्यति चात्ममाया"(वराह.उ.2.69) इति वराहश्रुत्युक्तकार्यक्षमाशब्दस्य जन्मान्तर-विषयत्वेन तद्विनाशोक्तेश्चारितार्थ्यात् सद्यः फलजनकत्वाविरोधः। "यस्मिन् काले स्वमात्मानं योगी जानाति केवलम्। तस्मात् कालात् समारभ्य जीवन्मुक्तो भवेदसौ"(वराह.उ.2.42) इति श्रुत्युक्तप्रकारकजीवन्मुक्तिलाभानन्तरं ज्ञात्वा क्रियमाणयोः पुण्यपापयोर्हि फलं सद्य एव भुञ्जीत। न चेदमुपपादनमत्यु-त्कटस्मृत्यनुरोधि मन्तव्यम्, आगामिनिषेधश्रुत्यनुरोधित्वात्।

यद्यप्याध्यात्मोपनिषच्छ्लोकैः -

"प्रारब्धं सिद्ध्यति तदा यदा देहात्मना स्थितिः। देहात्मभावो नैवेष्टः प्रारब्धं त्यज्यताम् अतः। ज्ञानेनाज्ञानकार्यस्य समूलस्य लयो यदि। तिष्ठत्ययं कुतो देह इति शङ्कावतो जडान्। समाधातुं बाह्यदृष्ट्या प्रारब्धं वदति श्रुतिः। न तु देहादिसत्यत्व[१] बोधनाय विपश्चिताम्।"(अध्यात्म.उप.56,59 ,60)

इत्यादिभिः प्रारब्धमपि प्रतिषिध्यते । तत्तु, ब्रह्मविद्वरिष्ठजीवन्मुक्ता-भिप्रायं मन्तव्यं, न तु ब्रह्मविज्ञीवन्मुक्ताभिप्रायम्।

तदभिप्रायेण हि तत्रैवोपनिषद्यभिहितम्:-"व्याघ्रबुद्ध्या विनिर्मुक्तो बाणः पश्चात्तु गोमतौ। न तिष्ठति भिनत्त्येव लक्ष्यं वेगेन निर्भरम्।"(अध्या.उ.54) [इति]।

यद्यपीह प्रारब्धसुखदुःखयोरध्यासमूलकत्वाद् देहाद्यध्यासनिवृत्तौ सुख-दुःखरहितो ब्रह्मविद्वरिष्ठः प्रेतसादृश्यं भजेतैव। अध्यासो ह्यतस्मिन् तद्बुद्धिरिति

१. 'सत्य' इति मातृकायाम्।

देहादावात्मन्यसति सदात्मबुद्धिः प्रसिद्धः। "पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ"(ब्र.सू.3.2.5), "देहयोगाद् वा सोऽपि"(ब्र.सू. 3.2.6)इत्याभ्यां ब्रह्मसूत्राभ्यां स्वरूपतिरोभावस्य देहयोगमूलकत्वम् अवगम्यते।

अयमेव तिरोभावोऽध्याससंज्ञकः। अतस्तस्य निर्मुक्ताध्यासस्य देहे प्राणेन्द्रियवियोगो भवितव्य एव।

तथाऽपि पूर्वोक्तप्रकारेण तदन्यस्य ब्रह्मविदो जीवन्मुक्तस्य प्राणेन्द्रियादि-युक्तस्यापि न सुखदुःखे भवितुमर्हतः। यथा वन्ध्यायाः स्वीकृतपुत्रापत्संपदोस्तद्वत्।

यद्वा सुखदुःखे स्तां नाम। सम्यग्दर्शनेन पूर्वोत्तरकर्मणां भर्जितत्वान्न पुनर्जन्मप्रसक्तिः।

नच ब्रह्मापरोक्षावगतिमात्रेण कश्चिदपि मुक्ताध्यासो भवितुमर्हति। श्रवणमननजनितताद‍ृशावगत्त्यनन्तरं विविक्ते क्रियमाणेन निदिध्यासनयोगा-भ्यासेनैवाध्यासविनिर्मोक्संभवात्। तस्मात् कर्मप्रधानजीवन्मुक्तिवादिन एव निदि-ध्यासनप्राधान्यवादित्वात्तन्मतमेव श्रुत्यादिनिखिलप्रमाणसंमतमवगन्तव्यम्।

३७.प्रश्नः: ननु "तदैक्षत लोकान्नु सृजा"(छां.6.2.3)इति, "सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता"(छां. 6.2.2) इत्यादिश्रुत्युक्तेक्षणमेव "पराभिध्यानात्" (ब्र.सू.3.2.5)इति सूत्रोक्ताभिध्यानं भवति। तथा सति तदभिध्यानं परमात्मकर्तृक-मेव स्यात्। परस्य त्वात्मनः मनःप्राणेन्द्रियादिराहित्यं सर्वत्रावगम्यते "अप्राणो ह्यमनाः शुभ्रः"(मुं.2.12)इत्यादिश्रवणात्। अभिध्यानं च समनस्ककर्तृकमेव स्यात्, नाममनस्ककर्तृत्वम्।

अतोऽभिध्यानकर्ता जीवः[१] परो वेति संशीयते।

<u>उत्तरम्</u>: अमनस्कस्यापि परमात्मनश्चिच्छक्तिवशात् स्वरूपोल्लासा-

१. 'जीवं' इति मातृकायाम्।

त्मकम् अभिध्यानमुपपद्यत इति भाष्यादिष्ववोचाम। द्वयोरपि जीवात्मपरमात्मनोर्गुहाप्रवेशश्रवणेन देहयोगात् स्व(स?)द्वितीयादिध्यानकर्तृत्वमुपपद्यते। यतस्तुर्यदेहे परस्य, कारणदेहे प्रतीचः, सूक्ष्मदेहे प्राज्ञस्य, स्थूलदेहे तैजसस्य च योगो भवति। ततो यथासंभवमशेषाणामभिध्यानकर्तृत्वोपपत्तिः।

न संशयितव्यम्।

३८.प्रश्नः:- ननु विश्वाख्यस्य हि जीवस्य स्थूलदेहयोगः प्रसिद्धः। कथमिह तैजसस्य स उच्यते? यदि तैजसः स्थूलदेहयुक्तः स्यात्, तदा स्थूलदेहविनाशसमकालं तैजसस्य विनाशः स्यात्। मरणानन्तरं लोकान्तरगमनं च तस्यैव प्रसिद्धं निरुध्येत। लोकान्तरगमनाभावे तु नास्तिकसिद्धान्तः प्रसज्यते। प्राज्ञाख्यस्य तु जीवस्य मनःप्राणेन्द्रियाद्यभावान्न गमनमवकल्पते। तैजसाभिमानविषयभूतश्च सूक्ष्मदेह आमोक्षादविनाशीति सर्वशास्त्रसंमतम्। यदा त्वभिमानी नष्टस्तदैवाभिमानविषयभूतं वस्तु च नष्टमेव भवेत्। तथाहि लोके बहुधा दृश्यते।

तस्मात् तैजसस्य सूक्ष्मदेहाभिमानिनः स्थूलदेहयोग इत्यनुपपन्नम्।

नच तुर्यदेह इति क्वचिदपि वेदान्तशास्त्रेष्वभिधीयते। स्थूलसूक्ष्मकारणाख्यानां त्रयाणामेव देहानां सर्वत्र प्रसिद्धत्वात्। देहत्रयविलये हि तुर्यस्य प्रत्यगाख्यस्यादेहस्यात्मनः परब्रह्मणैक्यं प्रसिद्धम्। परब्रह्म त्वशरीरं, तेनैक्यमशरीरस्यैव भवितुं युक्तं, न सशरीरस्य। न च परब्रह्म देहेन संयुज्यते, सर्वगतत्वान्निर्लेपत्वाच्च।

तस्मादिह तुर्यदेहकल्पनं विश्वाख्यजीवकल्पनं चाप्रमाण इति।

**उत्तरम्:** अत्रोच्यते- नायं दोषः। तैजसस्य स्थूलभूतदेहयुक्तस्यापि स्थूलविनाशसमकालविनाशाभावात्। यथा हि "आत्मा वै पुत्रनामासि[१]" (कौ.उ.

---

१.'पुत्रनामासीत्' इति मातृकायाम्।

2.11) इति श्रुत्यनुरोधेन पितुरेव पुत्रदेहेन संयोगेऽपि पुत्रदेहनाशकाले पिता न नश्यति, तथा तैजसस्यामोक्षविनाशित्वाल्लोकान्तरगमनाभ्युपरोधो न स्वप्नेऽपि शङ्क्यः। न च विश्वाख्यजीवाकल्पनदोषः प्रसज्यते, तैजसस्य स्थूलदेहयोगसम-कालं विश्व इति नामरूपसंभवात्। तर्ह्येकजीववादापत्तिरिति चेन्न, तिरोहित-स्वरूपत्वेनेति त्रयोविंशतितमोत्तरे निहितत्वात्।

तस्मात् सूक्ष्मदेहाभिमानिनोऽपि तैजसस्य स्थूलदेहयोग इत्यनुपपन्नमेव।

यत्तु तुर्यदेहो नाभिधीयत इत्युक्तं, तत्प्रत्युच्यते- परब्रह्मणोपासनया प्रकृतिसंज्ञकस्य तुर्यदेहस्य विलये सति हि प्रत्यगात्मा ब्रह्मणैकीभवति। अतो 'दह्यत इति देह' इति व्युत्पत्तिस्तत्रावगन्तव्या। न च तादृशशरीरिणोऽशरीरे-णैक्यं विरुध्यते- माण्डूक्योक्तप्रकारसप्ताङ्गत्वैकोनविंशतिमुखत्वाद्यभावात्। प्राज्ञ-स्तृतीयस्त्वेवंविधोऽपि कारणदेहनाशे प्रकृत्यवच्छिन्नत्वान्न ब्रह्मैक्यं गच्छति। ब्रह्म च प्रकृत्या संयुज्येत, प्रकृतेर्विशुद्धतरत्वात्। शुद्धस्य हि शुद्धेन संयोगः सर्वत्र दृष्टः।

तस्मादप्रमाणं किञ्चिदपि न मयोक्तं मन्तव्यम्।

३९.प्रश्नः:ननु माण्डूक्येऽभिहितम्-" दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजसः। आकाशे च हृदि प्राज्ञस्त्रिधा देहे व्यवस्थितः"(मां.का.1.2)इति। ब्रह्मो-पनिषदि-"अथास्य पुरुषस्य चत्वारि स्थानानि भवन्ति। नाभिर्हृदयं कण्ठो मूर्धा च। तत्र चतुष्पादं ब्रह्म विभाति। जागरिते ब्रह्मा, स्वप्ने विष्णुः,सुषुप्तौ[१] रुद्र-स्तुरीयम् अक्षरम्" इति। (ब्रह्म.उ.उपक्रमः)तत्रैवान्यत्र "नेत्रस्थं जागरितं विद्यात् कण्ठे स्वप्नं समाविशेत्। सुषुप्तं हृदयस्थं तु तुरीयं मूर्ध्नि संस्थितम्।"(ब्रह्म.उ.उप-संहारपद्यतः प्राक् द्वितीयं पद्यम्)" इति।

---

१.'सषुप्तौ' इति मातृकायाम्।

अत्र क्रमप्राप्तौ नाभिमेव तुर्यस्थानं वक्तव्यमनुक्त्वा मूर्ध्नस्तुरीयस्थानत्वाभिधानं किंकारणकं न जाने।

**उत्तरम्:**अवरोहणरीत्याऽध्यारोपक्रमे सुषुप्तस्य तृतीयत्वेन नाभेस्तुर्यस्थानत्वसंभवेऽप्यारोहणरीत्याऽपवादक्रमे जागरितस्य तृतीयत्वेन मूर्ध्न्येव तुर्यस्थानसंभवाददोषः। जागरितावस्थायां हि श्रवणादिसाधनकलापोऽनुष्ठीयमानो दृश्यते। अतस्तस्याम् एव सुषुप्तिस्वप्नयोर्विलयद्वारा मूर्धावस्थिततुरीयप्राप्तिरुपपद्यते। माण्डूक्यश्लोकस्तु प्रकृतः समन्वयविरोध्यपि तुर्यस्थानाकथनात् सामान्यार्थोऽवगन्तव्यः।

**४०.प्रश्नः:** तर्हि, जागरितावस्थायाः सर्वश्रैष्ठ्यवशात् तदवस्थितस्य चतुर्मुखस्य विष्णुरुद्राभ्याम् आधिक्यं प्रसज्यते। स हि द्वाभ्यामर्वाचीन एव सर्वश्रुतिस्मृतिपुराणैरवगम्यते। अत इदमुपपादनमयुक्तमिति।

**उत्तरम्:** नायं दोषः। "ब्रह्मा देवानां प्रथमः संबभूव"(मुं.1.1.1)इत्यादिश्रुतिभ्यो ब्रह्मणः कार्यस्य प्रथमजत्वेन सर्वाग्रणीत्वात्[१]। ब्रह्मणा सृष्टस्य प्रपञ्चस्य स्थितिसंहारार्थमनन्तरजातौ हि विष्णुरुद्रौ। अतो युक्ततरमिदमुपपादनम्[1]।

---

1.ब्रह्मोपनिषन्नाम्न्या नवीनोपनिषदो मतस्य प्रतिफलनमेतत्। 'जागरिते ब्रह्मा स्वप्ने विष्णुः 'इत्यादि यदुक्तं ब्रह्मोपनिषदि तत्रेदं विचार्यम्:- तदाशयरीत्या सृष्टिस्थित्योः किल क्रमेण ब्रह्मविष्णू अधिपती। जागरिते केवलं सृष्टिः, स्वप्ने केवलं स्थितिरिति किमत्र नवीनोपनिषत्कारोऽभिप्रैति? तथा सति,जागर्तेः पारमार्थिकत्वेऽपि स्वप्नस्य पारमार्थिकतरत्वं स्यात् सृष्ट्यपेक्षया स्थितेः प्राधान्यात्।अवस्थास्तिस्रो देवताश्च तिस्र इति प्रसिद्ध्या एकस्यामवस्थायामेका देवतेति गणितक्रमेण विभागः कृत

---

१. 'सर्वाग्रणित्वात्' इति मातृकायाम्।

४१.प्रश्नः ननु " य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच। एतदमृतमेतदभयमेतद् ब्रह्म"(छां.4.15.1)इति छान्दोग्यश्रुतेरक्षिपुरुषस्यामृताभयब्रह्मसामानाधिकरण्यदर्शनात् तुर्यत्वं सिद्धम्। "अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः"(क.उ .2.1.12,13)इति कठवल्ल्या हृदि स्थितस्य तुर्यत्वं सिद्धम्। मूर्धा च तुर्यस्थानं पूर्वमभिहितम्। योगशास्त्रेषु मूलाधारादिस्थानान्तराणि च कुण्डल्युत्थापनादिद्वारा दर्शनीयज्योतिष्मत्तया तुर्यार्थकानि भवन्ति। एवं सति, तुर्यस्य स्थाननिर्देशोऽव्यवस्थित इति तच्छ्रवणे मुमुक्षूणां वैरस्यमेवोपजायेत।

नच परमात्मत्वेन तुर्यस्य सर्वगतत्वोपपत्त्या बहुस्थाननिर्देशो न विरुद्ध इति वाच्यं, परमात्मन आकाशवत् सर्वगतत्वाभ्युपगमेन प्रत्यायतनं खण्डतया सर्वगतत्वानभ्युपगमात्। परमात्मा हि पाणिपादादिष्वप्येकाकारेणावतिष्ठते। नायं खण्डाकारस्तुरीयस्तेष्ववयवेषु भवति।

न चास्य पादतलकण्टकतोदनाद्यवगमात्[1] सर्वव्यापकसिद्धिरिति वाच्यं;

---

उपनिषत्कारेण यो गणितस्यात्राकिञ्चित्करत्वं न जानाति। 'विशेषः कालिकोऽवस्था'इत्यमरः। कालस्यापि ब्रह्मण्यध्यस्तत्वं वदतां वेदान्तिनां मतेऽवस्थात्रयवत्त्वमपि अध्यारोपदृष्ट्यैव सिद्ध्यति ब्रह्मणि, न तु पारमार्थिक्या दृष्ट्या। अपि च स्वप्नस्य स्वप्नत्वं जागर्तिदृष्ट्यैव; न पुनः स्वप्नदृष्ट्या- स्वप्नकाले स्वप्नस्यापि जागर्तित्वेनानुभूयमानत्वात्। तस्माज्जागर्तेः "प्रथमत्वं " न सिद्ध्यति, येन "ब्रह्मा देवानां प्रथमः संबभूव" इति श्रुतेरतात्पर्याया उद्धरणस्यावसरः स्यात्। यदि च ब्रह्मोपनिषत्कारः प्राधान्यदृष्ट्या ब्रह्माधिपतित्वं जाग्रतो विवक्षति, स्वप्नस्यापि स्वप्नदृष्ट्या जागर्तित्वात् जाग्रतः प्राधान्यं दोलायमानमेव।

1.अत्र "कण्टकतोदनाद्यवगमात्" इत्येतावान् भागो रेखाङ्कितः। इङ्ग्लीभाषायाम् एवं लिखितम्-? See the original.

"अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद् हृदि हि"; अविरोधश्चन्दनवत्(ब्र.सू. 2.3.24-23-26)इत्यादिसूत्रैर्हृदयमात्रावस्थितस्यापि त्वक्संबन्धादापादतलव्याप्तिर्न विरुध्यत इत्युक्तत्वात्।

अतो नायं विभुः परमात्मेति।

**उत्तरम्:** अत्रोच्यते- न हि तुर्यस्य बहुस्थानवत्त्वेऽपि तच्छ्रोतॄणां वैरस्यं भवितुमर्हति। कुतः? -अनुपपत्त्यभावात्।

"मूर्धानं निर्भिद्यैतया द्वारा प्रपद्यते"(?)[1] -इत्यैतरेयश्रुत्यनुरोधेन ब्रह्मरन्ध्रादन्तःशरीरेऽनुप्रविष्टो हि प्रत्यगात्मा मूषानिषिक्तभूतताम्रवदुचितेष्वायतनेष्ववतिष्ठते। एकस्याप्यायतनभेदाद् भेद उपपद्यते। मुखस्य सन्निधौ च बहुवस्तुषु विद्यमानेष्वप्युचितेषु दर्पणादिषु केवलमभिव्यक्तिर्भवति। वापिकायामविशेषेण जलप्रवाहे संभवत्यपि ह्रासकाले तत्रत्यावटेषु केवलं जलानि धार्यमाणानि दृश्यन्ते। अतः पाणिपादादिषु प्रत्यगात्मज्योतिषोऽभिव्यक्त्यभावो न दोषाय भवितुम् अर्हति। तर्ह्येवं प्रत्यगात्मन आयतनभेदवशादाकारभेद आस्ताम्।

"नीहारधूमार्कानलानिलानां खद्योतविद्युत्स्फटिकशशीनाम्। एतानि रूपाणि पुरःसराणि ब्रह्मण्यभिव्यक्तिकराणि योगः"( श्वे.उ.2.11 )इति श्रुतेः प्रतिपाद्यमानस्य वर्णभेदस्य किं कारणमिति चेदुच्यते-

लोहितशुक्लकृष्णहरितादिनानावर्णानां नाडीनां संबन्धवशादेकवर्णस्यापि बहुवर्णत्वोपपत्तेः। तथा च मण्डलब्राह्मणोपनिषदि"योगाभ्यासवशान्नीलज्योतिः शुक्लज्योती रक्तज्योतिश्च दृश्यते[2] "इत्यभिधीयते। अतोऽयं प्रत्यगात्मा विविधज्योतिराकारोऽपि परमात्मांशभूत एव विष्फुलिङ्गादिवदवगन्तव्यो न तु भौतिकं तार्तीयीकं ज्योतिरिति, कौक्षेयं ज्योतिरिति वा शङ्क्यम्।

1.एतत् ऐतरेयोपनिषदि नोपलभ्यते। 2.सारमात्रमिदं न समग्रवाक्यम्।

४२.प्रश्नः ननु "अन्तस्तद्धर्मोपदेशात्"(ब्र.सू.1.1.20)इत्याद्यधिकरणेषु परमात्मन एवोपासनार्थेऽक्ष्याद्यायतनानि परिकल्पितानीत्युक्तम्। अन्यथाऽभ्युपासना न घटते, अपरिच्छिन्नत्वेन साधकबुद्धिग्राह्यत्वानुपपत्तेः।

न चोपसनां विना कस्यापि चित्तशुद्धिर्भवितुमर्हति। नाप्यशुद्धचित्तस्य सहस्रशोऽवबोधितमपि तत्त्वज्ञानमुपपद्यते।

अक्ष्यादीन्यायतनानि त्वविद्याप्रत्युपस्थापितपाञ्चभौतिकदेहाश्रयत्वेन वाचारम्भणश्रुत्यनुरोधितया मिथ्या भवितुमर्हन्ति।

अत्रैवं सत्यक्षिपुरुषस्य परमात्मनश्चांशांशिभेदः कथं वाच्यः?

आयतननिर्देशेऽप्यात्मनोऽक्ष्यभ्यन्तरस्य पुरुषशब्दवत्त्वात् पूर्णपरमात्मत्वमेव वक्तुं युक्तम्। पुरुषशब्दस्य हि "पूर्णत्वात् पुरुष" इति च व्युत्पत्तिः प्रसिद्धाऽस्ति। "अतो ज्यायांश्च पुरुषः"(ऋ.10.9.3 यजु.30.3 चित्त्यु.12.1)इति, "पुरुष एवेदं सर्वं"(श्वे.उ.3.15)इति, "पुरुषान्न परं किञ्चित्"(कठ.उ.1.3.11)इति चैवमनन्तश्रुतिप्रतिपादितत्वात्। यद्यायतनानि नित्यानि, स्युस्तदा प्रत्यक्परभेदः परमार्थः स्यात्। न तु नित्यानि भवन्ति। शरीरनाशकाले सर्वेषामप्यायतनानां विनाशवशादात्मनः परब्रह्मत्वसंभवात्।

तर्हि दर्शनश्रवणाद्यनपेक्षं मरणमात्रेण सर्वेषामपि ब्रह्मात्मैक्यलक्षण-कैवल्यमुक्तिप्रसंग इति चेन्न, सूक्ष्मकारणशरीरयोर्विनाशार्थं साधनानाम् अनुष्ठेयत्वात्। मरणकालीनपरब्रह्मैक्यप्रदर्शनं त्वक्षिपुरुषस्य ब्रह्मांशत्वनिवृत्त्यर्थकं मन्तव्यं, न तु मोक्षार्थम्। न च सूक्ष्मशरीरे कारणशरीरे वैतान्यायतनानि सन्ति। येन मरणकालेऽपि ब्रह्मैक्यासिद्धिः प्रसज्येत।

अतः प्रकृतोऽक्ष्यभ्यन्तरः पुरुषः परमात्मैव न प्रत्यगात्मेति।

**उत्तरम्:** न ह्यक्षाद्यायतनानि वाचारम्भणश्रुत्यनुरोधेन मिथ्येत्यनित्या-

नीति वा वक्तुं युक्तं, स्थूलशरीरे नष्टेऽपि सूक्ष्मकारणशरीरयोः प्रतिभासात्मना बीजात्मना च तेषां विद्यमानत्वात्।

तथाहि- माण्डूक्ये सप्ताङ्गत्वैकोनविंशतिमुखत्वादिकमविशेषेणोच्यते। संततिमतोऽपि स्थूलशरीरस्य नूतनतया मोक्षादविनाशित्वे सति कैमुतिकन्यायेन सूक्ष्मकारणयोरविनाशित्वात्। यद्यप्युपासनार्थान्येवायतनानि भवन्ति, न तु परमात्मोपासनार्थानि परमात्मनोऽपरिच्छिन्नत्वेनाक्ष्यन्तरवस्थानानुपपत्तेर्दन्तिनो नीडावस्थानमिवानुपपन्नमिति भाष्ये चावोचाम।

न च भवदाशयानुसारिणः परमात्मनो निर्विशेषत्वादुपास्यत्वमभ्युपगच्छन्ति, अवगतिमात्रयोग्यत्वाभ्युपगमात्। प्रत्यगात्मनस्त्वङ्गुष्ठवालाग्रनीवारशूकप्रादेशाग्रादिप्रमाणतया यथोचितमायतनत्वमुपपद्यते। तदुपासना चाचिरेणैव चित्तशुद्धिं जनयेत्। तस्य विभुत्वसिद्ध्यै श्रवणादीनि चोपयुज्यन्ते। अन्यथा साधनवैयर्थ्यापत्तेः। यदि मरणकालेऽक्षिपुरुषस्य ब्रह्मैक्यं सिद्ध्येत्, ततो न विनाशयितव्ये सूक्ष्मकारणशरीरे भवितुमर्हतः, तद्विनाशाद्[१] विना ब्रह्मैक्यासंभवात्।

यदुक्तं पुरुषशब्दस्य व्युत्पत्त्या पूर्णार्थकत्वमिति, तत्रोच्यते- एवमवयवार्थो हि 'पुरि शेत' इति व्युत्पत्त्या च प्रसिद्धोऽस्ति। उभयथाऽर्थप्रसिद्धावप्यौचित्यादेवार्थस्य निर्णेयत्वादक्ष्यभ्यन्तरः पुरुषः पुरि शयानः प्रत्यगात्मैव स्यात्, न तु पूर्णपरमात्मेत्यवगन्तव्यम्।

४३.प्रश्नः: ननु पुरुषशब्दस्य पुरि शयार्थकत्वेऽपि पूर्णपरमात्मपरत्वमेवावगम्यते। तथा हि- "अथ यदिदमस्मिन् दहरं पुण्डरीकं वेश्म, दहरेऽस्मिन् अन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद् वाव जिज्ञासितव्यम्[२]"( छां.8.1.1) इति श्रुत्यनुरोधिना दहराधिकरणेन दहराकाशस्य सर्वगतपरमात्मत्वावधारणात्

१.'तद्विनाशा' इति मातृकायाम्।
२.'पिज्ञासितव्यम्' इति मातृकायाम्।

पूर्णत्वं भवति। "यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश"( छां.8.1.3) इत्याद्युत्तरहेतुभ्यः पुण्डरीकपरिवेष्टननिमित्तस्य परिच्छिन्नत्वस्य बाह्याकाशोपमानेन निवर्तितत्वात्। तस्मात् पुरिशयावयवार्थोऽपि युक्तम्। तस्मात्, "परात् परं पुरिशयं पुरुषमीक्षते" ( प्रश्न.5.5) इति श्रुत्या च पुरि शयस्येक्षितव्यपरमात्मत्वमवगम्यते।

उत्तरम्: अत्रोच्यते- नायं दोषः, बाह्याकाशोपमानेन पुण्डरीकपरिच्छेदस्य व्यावर्तितत्वेऽपि प्राग् ब्रह्मात्मैक्यानुभवाद् देहस्य विवक्षितदृष्टान्तश्रवणमात्रेण स्वयमपरिच्छिन्नत्वासिद्ध्या पूर्णत्वाभावेन प्रत्यगात्मत्वाव्यभिचारात्। हृदयपुण्डरीकं हि मांसपिण्डात्मकं द्विसप्ततिसहस्रनाड्याधारभूतं बहुश्रमसाध्येन निदिध्यासनसमाधियोगाभ्यासेन विना न कस्यचिदपि विलीयेत। तद्विलयनानन्तरं हि दहर आत्मा बाह्याकाशवत् सर्वगतो भविष्यति। तथा सति पूर्णत्वोपमानश्रवणमात्रेण स्वं सिद्धार्थं मन्यमानस्य किं प्रयोजनम्? तस्मादपरोक्षतयेक्षितव्यस्य परमात्मत्वेऽप्यधुना व्यवहारदशायां पुरिशयः पुरुषः प्रत्यगात्मैवेति स्थितम्।

४४.प्रश्नः: ननु माण्डूक्ये स्थूलसूक्ष्मदेहयोरविशेषेण सप्ताङ्गत्वैकोनविंशतिमुखत्वे प्रोच्येते। सप्ताङ्गानि हि पादोरःपाणिगण्डानि अष्टाङ्गस्यापि शिरोऽन्तर्धायायं प्रयोगः। नारदपरिव्राजकेऽष्टाङ्ग इति स्पष्टमभिधीयते च। एकोनविंशतिमुखानि तु वागादीनि कर्मेन्द्रियाणि पञ्च, प्राणादयः पञ्च,मनोबुद्ध्यहंकारचित्तानि चत्वारि, एवं श्रुत्युक्तार्थस्य लोकानुभवमनुसृत्य विमर्शे महान् विरोध उपजायते।

तथा हि- लोके मनुष्येतरेषां प्राणिनाम् अधिकान्यङ्गानि दृश्यन्ते। पक्षिणः पक्षौ,दन्तिनोऽन्यादृशौ दन्तौ, अङ्गुल्यभावः, चतुष्पात्त्वप्रसिद्धेः पादद्वयाधिक्यं, पाणिद्वयाभावः सर्पस्य पाणिपादाद्यनेकावयवाभावः। जलूकाया मुखद्वयं, नान्येऽवयवाः। एवं बहुप्रकारेषु प्राणिनां देहेषु मनुष्यस्य सूक्ष्मदेहः कथं प्रविशेत्?

मनुष्यस्य हि नानाविधपापवशान्नानाविधतिर्यग्जन्मानि दुःखोपभोगाय

जायन्त इति श्रुतिस्मृत्यादिभिरवगम्यते। तेषु तु गर्भस्थेषु स्थूलदेहेषु मनुष्यस्य सूक्ष्मदेह एव पर्यायेण प्रवेष्टव्यः। "खरोष्ट्रसूकरीविर्ग(वर्ग?)गोमायुमृगवक्षिताम्। (पक्षिताम्।)चण्डालपुल्कसत्वं च ब्रह्महा प्राप्नुयात् क्रमात्।"(?)इत्यादिबहुप्रमाणदर्शनात्। न च सूक्ष्मदेहस्यामोक्षादविनाशित्वादेकरूपत्वादागमापायित्वाभावाच्च वृद्धिक्षयावुपपद्येते।

यदि सूक्ष्मदेहावयवानां पुनः पुनरुत्पत्तिविनाशौ स्यातां, तदा पादच्छेदद्वारा पादहीनं शरीरम्, अङ्गुलिच्छेदद्वाराऽङ्गुलिहीनं शरीरं पक्षोत्पत्तिद्वारा पक्षवन्तं, वालोत्पत्तिद्वारा वालवन्तं च प्रविश्याविरोधेन तत्र तत्रावतिष्ठन् कर्मफलानि भुञ्जीत, न तूत्पत्तिविनाशौ भवतः।

तस्मात् सूक्ष्मदेहस्य श्रुत्युक्तमप्यष्टाङ्गत्वादिकमेवं युक्त्यनुभवविरुद्धत्वादसमञ्जसं मन्ये। यद्येतद्विरोधपरिहारार्थकान्यन्यानि श्रुतियुक्त्यनुभवप्रमाणानि स्युस्तानि सद्गुरुणा वक्तव्यानि।

उत्तरम्: "पञ्च प्राणमनोबुद्धिदशेन्द्रियसमन्वितम्। अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्।"( ? )इति सूक्ष्मदेहस्य सप्तदशतत्त्वसहितत्वं प्रसिद्धम्। माण्डूक्योक्तमधिकं तत्त्वद्वयं चास्तां नाम, न तावता विरोधोऽस्ति। अष्टाङ्गेभ्य इतराणि त्वागमापायीनि न भवितुमर्हन्ति। पञ्चीकृतभूतकार्याणां नानाविधस्थूलशरीराणां सगुणेश्वरस्रष्टृत्वादपञ्चीकृतभूतकार्याणामेकविधसूक्ष्मशरीराणां निर्गुणब्रह्मस्रष्टृत्वाच्च स्थूलसूक्ष्मदेहयोः सर्वसाम्यानुपपत्तेः।

यदा हि मनुष्यस्य सूक्ष्मदेहः पक्षिदेहं प्रविशति, तदा नूतनौ पक्षौ जायेते। यदा च पशुदेहं तदा वालं च। दन्तिदेहप्रवेशे त्वन्यादृशौ दन्तौ जायेते। स्वीया द्वात्रिंशद्दन्ताश्छिद्यन्ते[१]ऽङ्गुलयश्च। पाणिद्वयस्यैव पादत्वव्यवहारान्न[२] तत्र

२.'द्वात्रिंशद्दन्ताच्छिद्यन्ते' इति मातृकायाम्।
२.'पादव्यवहारान्न' इति मातृकायाम्।

विरोधः। सर्पस्य तु पादोदरत्वप्रसिद्धेरादानक्रियादर्शनाच्च नाष्टाङ्गलोपः। जलूकायां द्वितीयं मुखं नूतनमुपपद्यते।

एवमामोक्षादविनाशिभ्यः प्रसिद्धेभ्योऽष्टाङ्गेभ्य इतरेषां सर्वेषां सूक्ष्मदेहीयावयवानां तत्तत्स्थूलप्रवेशाविरोधेन तत्तत्स्थूलसंबन्धमहिम्ना उत्पत्तिविनाशसंभवान्न कियानपि श्रुत्यादिप्रमाणानाम् उपरोधोऽस्ति।

यथा हि तिर्यक्षु वागादिषु सत्त्वेषु सत्स्वपि तत्सहजधर्माणामपि वचनादीनां लोपो दृश्यते। तथाष्टाङ्गव्यतिरिक्तानाम् अङ्गानाम् एकोनविंशतितत्त्वव्यतिरिक्तानां तत्त्वानां चागमापायित्वमुपपद्यते। एवं माण्डूक्यार्थस्याविरोधेन समर्थितत्वादुक्तार्थस्य श्रुत्यन्तरप्रमाणप्रदर्शनं न दोषाय भवितुमर्हति।

तर्हि मनुष्यसूक्ष्मदेहस्य प्रबलपापवशाद् वृक्षादिस्थावरजन्म च स्यात्। तत्राष्टाङ्गानाम् एकोनविंशतितत्त्वानां चानुपलभ्यमानत्वादयौक्तिक एवायं देहान्तरप्रवेशविचार इति चेन्न वृक्षस्य तत्तन्मूलमध्याग्रादिभिरष्टाङ्गसम्भवात्। तत्त्वानि तु सन्त्येव,वृत्तिलोपान्न प्रकाशन्ते।

अतः समञ्जसतरमेवेदमुपपादनं मन्तव्यम्।

**४५.प्रश्नः** ननु भूतप्रेतपिशाचडाकिनीहाकिनीशाकिनीयक्षराक्षसासुरदेवपितृगन्धर्वकिन्नरकिंपुरुषसिद्धसाध्योरगचारणा इति जातिभेदाः श्रूयन्ते। तेषां देहेष्वपि मनुष्यदेहान्तर्गताः सूक्ष्मदेहा एव किं पूर्वोक्तरीत्या प्रविशन्ति उतान्य इति संशये सति प्राप्तं तावत्तदन्य एवेति।

कुतः- मनुष्यैः पापवशाद् भूतादिजन्मसु प्रापणीयेष्वपि पुण्यवशाद् त्देवादिजन्मसु प्रापणीयेष्वपि च देवनरतिर्यगात्मकस्य जगत आदिसृष्टावपि विद्यमानत्वेन पूर्वसिद्धत्वात्। देवनरतिरश्चां सृष्टिक्रमप्रतिपत्तावपि सत्यलोकाधिपतिना स्रष्ट्रा स्वसमीपवर्तमाना देवा एव प्रथमं स्रष्टा इति युक्तम्। ततो

नरास्ततस्तिर्यञ्चश्चेति एकैकस्थूलदेहस्य चैकैकसूक्ष्मदेहे पूर्वसिद्धे सति कथं जन्मान्तराणामुपपत्तिः? यद्वा भूतादीनामुक्तानामशेषाणां च मनुष्यैरदृश्यमाणत्वान्न स्थूलदेहाः सन्तीति वक्तुं शक्यम्। यथा हि मनुष्यस्थूलदेहेभ्य उत्क्रममाणानां प्रविशतां च सूक्ष्मदेहानाम् अदृश्यमाणत्वमस्ति, तद्वत्।

यदुक्तं सूक्ष्मदेहे पादादयः केचिदवयवा आमोक्षादविनाशिनः सन्तीति, तच्चानुपपन्नम्। कुतः? ब्रह्मलोकं जिगमिषूणां ह्युपासकानां स्थूलदेहत्यागानन्तरं गन्तुमशक्यतयाऽऽतिवाहिकैरमानवपुरुषैरुपरिनीयमानत्वमभिधीयते। "आतिवाहिकास्तल्लिङ्गात्"(ब्र.सू.4.3.4)इति सूत्रात्, "स एतान् ब्रह्म गमयति"(छां.4.15.6, 5.10.2 ) इति श्रुतेश्च। यदि सूक्ष्मदेहः पादवान् स्यात् ततः कथं गमनाशक्तता स्यात्?

तस्मात् सूक्ष्मदेहस्य पादादयश्चावयवाः स्थूलदेहासापेक्षा इति।

उत्तरम्:अत्रोच्यते-यद्यपि देवनरतिरश्चाम् अशेषाणां च सूक्ष्मदेहाः प्रसिद्धा एव। तथापि न जन्मान्तरानुपपत्तिरस्ति। त्रयाणां च पुण्यपापमिश्रत्ववशान्नवं नवं स्थूलदेहप्रवेशोत्क्रमणसंभवात्। सृष्टिक्रमश्चोक्तप्रकारविपर्ययेणैव भवितव्यः। स्रष्टा हि तिरश्चः प्रथमं सृष्ट्वा दूरमपास्याथ नॄन् सृष्ट्वा पश्चाद् देवान् ससर्जेति देवानां सामीप्यादवगन्तुं शक्यम्।

नच भूतादीनां स्थूलदेहा न सन्तीति वाच्यं, मनुष्यैर्भयङ्करमूर्तिमत्तया परिदृश्यमानत्वात्। श्रुतिस्मृतिपुराणेतिहासैश्च देवादीनां पूर्वमनुष्यदृष्टत्वं सँल्लापितत्वं चावगम्यते।

यद्यपि देवादिषु केषांचिद् दिक्पालादीनाम् आधिकारिकत्वेन प्रारब्धाधिकारावसाने कैवल्यसंभवात् पुनर्मनुष्यादिजन्मानुपपत्तिः स्यात्। तथापीतरेषां देवानां मनुष्यादिजन्मप्रतिपत्तौ मनुष्यादीनां दिक्पालादिजन्मप्रतिपत्तौ वा न

काचनानुपपत्तिरस्ति। मनुष्यदेहान्तर्गतस्यापि हि स्थूलदेहस्य ज्ञानकर्मसमुच्चय-तपःप्रवेशप्राबल्येन अदितिगर्भप्रवेशमहिम्ना सहस्रनयनत्वादिगुणविशिष्टस्थूल-देहवत्त्वोपपत्तेः।

यदुक्तम्-आतिवाहिकैर्नीयमानत्वात् सूक्ष्मदेहे पादादयो न सन्तीति-तत् प्रत्युच्यते- पादादीनां गमनादिवृत्तयो हि स्थूलापेक्षास्तथा सति स्थूलदेहत्यागा-नन्तरं तत्तदिन्द्रियवृत्त्यभावेन संपिण्डितकरणग्रामतया सूक्ष्मदेहाः पादादिमन्तोऽपि गमनाद्यशक्ता आतिवाहिकानपेक्षन्ते।

कथं तर्हि सूक्ष्मदेहैकप्रधानायां स्वप्नावस्थायां गमनाद्याश्च सर्वा वृत्तय उपलभ्यन्त इति चेन्नायं दोषः। स्थूलदेहसंवन्धस्यैव स्वप्नदर्शनात्। स्थूलसंबन्धस्य तु स्वप्नदर्शनं न कथंचन घटते।

अतः सर्वमनवद्यम्।

४६.प्रश्नः नन्वेवमेव ब्रह्मविष्णुरुद्राख्यान् त्रीनीश्वरानपि मनुष्यसूक्ष्म-देहाः प्रविशन्तीति वक्तुमयुक्तम्। तेषां हि शुद्धसत्त्वप्रधानमायाप्रतिविम्बत्वेन पाञ्चभौतिक-देहहीनतया भौतिकसूक्ष्मदेहानुप्रवेशो न कथञ्चनोपपद्यते।

यद्यपि प्रपञ्चसृष्टिस्थितिसंहाराधिकारवत्त्वेन तदवसाने दिक्पालाना-मिव कैवल्यमुक्तिसंभवादनन्तरकल्पादावन्ये जीवा एव प्रबलतरज्ञानकर्मोपा-सनादिसमुच्चयानुष्ठानवलेन तादात्म्ययोग्यतावशात् तास्वपि सृष्ट्यादिक्रियास्वधि-क्रियेरन्। तद्धेतोः पूर्वप्रसिद्धचिह्ना मूर्तयश्च भवितुमर्हन्ति। तथापि भौतिका-भौतिकयोर्विजातीयत्वेनेतरेतरविलक्षणतया संयोगस्यासंभवाद् दिक्पालावधिका एव जीवानुप्रवेशोऽभ्युपगन्तव्यो न तु त्रिमूर्त्यवधिकः।

जीवव्यूहस्याविद्यकत्वेन सेवकत्वम्, ईश्वरव्यूहस्य मायिकत्वेन सेव्यत्वं च प्रसिद्धम्। तथा सति सेवकस्य सेव्यमूर्त्यनुप्रवेशः कथमुपपद्यते?

ननु सगुणसायुज्यमुक्तिवादे मूर्त्यनुप्रवेश ऊरीकृतोऽस्ति! नायं दोषः। आकाशे नक्षत्राणामिव वृक्षे खद्योतानामिव च मुक्तजीवानां परमेश्वरमूर्तौ सँल्लग्नत्वेन मूर्त्याः पादमस्तकरहिततया तदीयसर्वसुखानुभवाभावात्। न च सायुज्यमुक्तस्य जगत्सृष्ट्यादिव्यापारः सरस्वतीसमेतत्वादिकं चाभ्युपगम्येते। आधिकारिकजीवस्तु स्वीयेन सूक्ष्मदेहेन पारमेश्वरीं कृत्स्नां मूर्तिं व्याप्नोतीत्यन्याय्यमेतत्।

न च ब्रह्मणो मृत्तिकाशौचप्रसिद्ध्या पुरीषवत्त्वाद्, विष्णोर्विष्णुरक्तपायिन इति प्रसिद्ध्या शुक्लवत्त्वाच्च भौतिकसिद्धेः साजात्यात् पूर्ववज्जीवेश्वरदेहयोः संयोगोपपत्तिरिति वाच्यम्-ईश्वरत्रयविम्वभूतस्य परंब्रह्मणः परंज्योतिर्मयत्वेन प्रतिबिम्वस्य च तादृशत्वोपपत्तेः मायायाश्च दर्पणस्थानीयोपाधेः शुद्धसत्त्वप्राधान्येन प्राक् पञ्चमहाभूतोत्पत्तेर्विद्यमानत्वेन उपाधिनिमित्तभौतिकत्वासिद्धेश्च। शुक्लशोणितपुरीषवत्त्वं त्वाधिकारिकप्रवृत्तिवैचित्र्यात् स्वेच्छया परिगृह्यमाणावान्तरस्थूलदेहवशादित्यनवद्यमिति मन्तव्यम्।

यद्युच्येत-अपञ्चीकृतभूतकार्याणां मनुष्यसूक्ष्मदेहानां पञ्चीकृतभूतकार्यान्यस्थलदेहैर्वैलक्षण्येऽपि संयोगसिद्धिवत् प्रकृतजीवेश्वरयोरपि भौतिकाभौतिकयोः संयोगः सिद्ध्येदिति। नैतद् युक्तम्। पञ्चीकृतापञ्चीकृतभेदेऽपि भौतिकत्वाविशेषेण संयोगसंभवात्। न हि सर्वथा[१]ऽत्रोपपत्तिरस्ति।

तस्माज्जीव एव कश्चन तपोविशेषादीश्वरो भवतीत्येतत् सुतरामनुपपन्नमिति।

**उत्तरम्:-**अत्रोच्यते। बाढमेवैतत् सर्वमपि। तथापि जीवस्येश्वरत्वावाप्तौ न कश्चन विरोधोऽस्ति। कथमिति चेदुच्यते।

---

१.'सर्वधा' इति मातृकायाम्।

मनुष्यस्थूलदेहान्तर्गतसूक्ष्मदेहाभिमानिजीवो हि कदाचित् परमेश्वरमूर्त्युपासनावानपि कदाचिन्निर्गुणब्रह्मात्मैक्यश्रवणमनननिदिध्यासनाभ्यासं कुर्वाणो बहुजन्मप्रभृतिज्ञानोपासनासमुच्चयनिष्ठो भवति। परमेश्वराधिकारवाञ्छया सम्यग्दर्शनविलम्बोऽभूत्। यदा तूभयतपःपरिपाकवशात् पूर्वेश्वरस्याधिकारावसानवशाच्च परमेश्वरत्वावाप्तिभाग्यं सन्निहितं, तदा मनुष्यस्यापि स्थूलदेहत्यागोत्तरक्षणे तदन्तर्गतसूक्ष्मकारणदेहयोर्निदिध्यासनावसानेन नष्टत्वात् स्वयमेव मायामयं परंज्योतिर्मयाऽऽपादमस्तकाशेषावयवोपेतमनन्तकल्याणगुणविशिष्टं दिक्पालाद्यखिलदेवगणाराध्यमानदिव्यचरणारविन्दं सरस्वतीदेव्युपशोभितवामाङ्कं लक्ष्मीदेव्यलङ्कृतविपुलोरःप्रदेशं वा पार्वतीदेव्यपहृतार्धभागं वा सकलवेदशास्त्रप्रसिद्धं दिव्यमपाञ्चभौतिकं शरीरमुपलभ्यते। अत्रैवं सति ब्रह्मपरिणामरूप ईश्वर इति प्रसिद्धः पक्षः, जीवपरिणामरूप एवेति प्रसिद्धतरः पक्षश्चाविरोधेन सिद्ध्यतः,जीवस्य ब्रह्मणश्च मायायां सँल्लग्नत्वात्। जीवस्य सम्यग्दर्शननिष्ठया परब्रह्मणि विलयेऽपि तदीयसूक्ष्मकारणदेहयोररूपनाशं विना मायायां विलीनत्वात्तात्कालिककैवल्यविघ्नः संजातः। तदरूपनाशासिद्धिहेतुकं हि सगुणैश्वर्योपभोगवाञ्छापूर्वकसगुणमूर्त्युपासनं बहुजन्मसु पूर्वं सादरमनुष्ठितम्।

अतो मायीश्वरदेह एवास्य विनष्टसंचितागामिकर्मणः प्रारब्धकर्मफलं मन्तव्यम्।

कथं तर्ह्यैश्वर्योपभोगवाञ्छावतो निर्गुणब्रह्मविचारफलसिद्धिः? विरक्तस्य हि मुमुक्षोस्तत्फलं प्रसिद्धमिति चेन्नायं दोषः। मन्दमध्यमोत्तमाधिकारिषु त्रिषु प्रसिद्धेषु मध्यमाधिकारिण एव प्रकृतत्वेनोक्तप्रकारकक्रममुक्तिसंभवात्।

एतेन मन्दाधिकारिणो मूर्तिसायुज्यद्वारा कैवल्यम्, उत्तमाधिकारिणोऽत्रैव देहावसाने सद्यः कैवल्यमिति चार्थात् सिद्धम्।

नन्वीश्वरस्य ब्रह्मनिष्ठत्वमनुपपन्नम्-अवतारभेदैरनेकजन्मश्रवणात्। न हि ब्रह्मनिष्ठस्य पुनर्जन्मत्वं क्वचिदप्युच्यते।

नायं दोषः- लीलावताराणामपि प्रारब्धान्तर्गतत्वात्। यदि द्विपरार्धा-वसानानन्तरं जन्माभिधीयेत, तदा सर्वमपि शास्त्रं विरुध्येत; न तु तदस्ति।

तस्मात् सर्वमनवद्यम्।

४७.प्रश्नः-स्वामिन् सद्गुरो ! अत्याश्चर्यपूर्वकोऽयमन्यः संशयोऽद्य मन्मनस्युपजायते। लोके हि मुमुक्षवः सर्वेऽपि स्वानुष्ठितकर्मभक्तिज्ञानयोगैः संस्कृता-त्मानः सद्यः क्रमेण वा मुक्तिं गच्छन्तीति सर्वशास्त्रप्रसिद्धम्। इदं त्विह पुत्रानुष्ठितैः श्राद्धादिकर्मभिः पितृपितामहप्रपितामहानां मुक्तिरिति विचित्रम्। तथा हि - लोके पुत्रः श्राद्धादिकर्मसु वसुरूपस्य पितू रुद्ररूपस्य पितामहस्यादित्यरूपस्य प्रपितामहस्य चावाहनादीनुपचारान् करोति। पूर्वमेव च पिण्डसंयोजनकाले पितृ-पितामहप्रपितामहान् वसुरुद्रादित्यैः संयोजितवान्। ये तु पितृलोकाधिष्ठिता-स्त्रयो वस्वादिदेवा आधिकारिकाः। यथाऽष्टदिक्पाला ब्रह्मविष्णुरुद्राश्चाभिहिता-स्तद्वत्।

एवं पित्रादीनां वस्वादिरूपत्वे सति तत्तदधिकारावसानकाले स्वयमेव कैवल्यं भवितुमर्हति।

तत्र विरोधश्चान्यो भवितुमर्हति। यथा चतुर्मुखस्य ब्रह्मणो द्विपरार्धावसान-काले विष्ण्वादिमूर्तिसंपत्त्यनपेक्षं परमपदप्रवेशः प्रसिद्धस्तथा वसोरवसानकाले रुद्र-संपत्त्यनपेक्षं कैवल्यं न सिद्ध्यति। कुतः-पौत्रेण क्रियमाणे पिण्डसंयोजने वसो रुद्रसंपत्तिदर्शनाद्, रुद्रस्यादित्यसंपत्तिदर्शनाच्च।

न चैवंप्रवृत्तानां वेदमन्त्राणामर्थवादत्वं वक्तुं युक्तम्-पिण्डसंयोजन-राहित्येन प्रेतीभूतानां केषाञ्चित् पितॄणां प्रतिवन्धरूपेण तत्तत्कुटुम्बबाधकत्वदर्शनि

प्रत्यक्षफलतया वस्वादिसंयोजितपित्रादीनां तत्तत्तादात्म्यवचनस्य मुख्यत्वोपपत्तेः।

अन्यश्चायं विरोधः-वसवो ह्यष्टावेवाधिकारिकाः प्रसिद्धाः। रुद्राश्चैकादश,आदित्याश्च द्वादश। लोके त्वेकैकस्य जीवस्य पितृपितामहप्रपितामहा भवन्तीत्यसंख्येया एव पित्रादयः। कथमेतेषां वस्वाद्यधिकारसिद्धिः?

ननु पुत्रकर्तृकपिण्डसंयोजनमात्रेण यदि पित्रादीनां वस्वादितादात्म्यं स्यात् ततः किमर्थं प्रत्यब्दिकाद्यनुष्ठानमिति चेन्नायं दोषः, तदनुष्ठानस्य पुत्राद्यभ्युदयार्थकत्वात्। यद्यपि पुत्रपौत्रनप्त्रादीनां च मोक्षार्थं न किञ्चिदपि पिण्डसंयोजनेतरदनुष्ठेयमस्ति। तथाऽप्यैहिकाभ्युदयाख्यकाम्यफलसिद्ध्यै प्रत्यब्दिकादीनि कर्माण्यनुष्ठेयान्येव। तस्मात् सपिण्डीकरणमात्रेण सर्वेषां मोक्षसिद्ध्या दर्शनश्रवणमनननिदिध्यासनादिचोदनानवकाशदोषप्रसंग इति।

उत्तरम्: अत्रोच्यते- न हि कस्यचिदपि दर्शनाद्यनपेक्षं मोक्षो भवितुमर्हति। वस्वादयस्त्रयश्च पितृलोकाधिष्ठिता देवा आधिकारिका एव। पित्रादीनां पिण्डसंयोजनेन वस्वादीनां मूर्तिसंपत्तिस्तु तत्तत्सायुज्यमुक्तिस्वरूपिणी मन्तव्या, न तु तत्तत्तादात्म्यस्वरूपिणी।

सायुज्यमुक्तानां तु पित्रादीनां वस्वादिभिन्नत्वात् तत्फलानुभवानन्तरं स्वस्वपूर्वकर्मानुगुण्येन नीचमध्यमोत्तमस्थानान्तराणि प्राप्येरन्।

नीचस्थानानि हि देवगन्धर्वमनुष्या[१]वासयोग्यानि,मध्यमस्थानानि वस्वादिसालोक्यसारूप्यसामीप्यात्मकानि, उत्तमस्थानानि त्वाजानजानां कर्मदेवानामिन्द्रस्य बृहस्पतेः प्रजापतेर्ब्रह्मणश्चावासयोग्यान्युत्तरोत्तरशतगुणानन्दवन्ति तैत्तिरीयोपनिषत्प्रोक्तानि। सायुज्यमुक्तिं हि वृक्षखद्योतवत् तल्लोकाधिपतिमूर्तौ जगद्व्यापारवर्जावस्थानलक्षणमवादिष्म। निर्गुणसायुज्यमुक्तानाम् अपुनरावृत्तावपि सगुण-

१.एतदनन्तरं मातृकायां 'वास' इत्यतः पूर्वं 'देवगन्धर्वमनुष्यगन्धर्व' इति पुनर्लिखितम्।

सायुज्यमुक्तानां स्वर्गलोकादिव पुनरावृत्तिरिति चावादिष्म।

न च पितृलोकादवरोहन्तः पित्रादयो यमलोकच्युता इव कपूयचरणाः स्युः, स्वर्गच्युतानामिव रमणीयचरणत्वसंभवात्। न चैतेन वेदमन्त्राणाम् अर्थवादत्व-दोषः प्रसज्यते। पित्रादीनां वस्वादिमूर्तिसँल्लग्नत्वावधारणेन पिण्डसंयोजनस्य सार्थक्यात्। अतः,‘ पौत्रेण क्रियमाणे पिण्डसंयोजने वसो रुद्रसंपत्तिदर्शनात्’ इत्यादिकल्पनमनवकाशमेव।

असंख्येयानां पित्रादीनां तु रमणीयचरणाख्यकब्राह्मणक्षत्रियवैश्य-जन्मसु प्राप्तेष्वपि तदनन्तरं स्वस्वपूर्वपापानुगुण्येन श्वसूकरचण्डालजन्मनि च भवितुमर्हन्ति।

यदुक्तं प्रत्याब्दिकश्राद्धाद्यनुष्ठानं पुत्रादीनां केवलाभ्युदयार्थमिति, तन्न; सकाममनुष्ठातॄणामभ्युदयसिद्धावपि निष्काममनुष्ठातॄणां चित्तशुद्धिसंभवात्। हीन-जन्मवतामपि पित्रादीनां वस्वादिप्रसादाद् यथाकथञ्चित् सौख्यसंभवाच्च।

तस्मात् सर्वेषामपि मुमुक्षूणां स्वानुष्ठितकर्मभक्तिज्ञानयोगैरेव मोक्ष-सिद्धिर्न तु पुत्रादिकर्तृकसपिण्डीकरणमात्रेणेति सिद्धम्।

**४८.प्रश्नः**:-नन्विह पापिनः पापफलानुभवार्थं यमलोकं जिगमिषो[१]-रुत्क्रमणावसरे यमभटैः प्रदृश्यमानमतिभयङ्करं यातनाशरीरं प्रविश्य जीवो यम-लोकं गच्छतीति गरुडपुराणादिभिरवगम्यते।

तत् किं यातनाशरीरं स्थूलं स्यादाहोस्वित् सूक्ष्ममिति संशये सूक्ष्ममेवेति प्राप्तम्। कुतः? तत्प्रविष्टस्य पापिनो यातनासिद्ध्यर्थमग्नौ संयोजित-मपि न दह्येतेति श्रूयमाणत्वात्। अपञ्चीकृतभूतकार्यं हि सूक्ष्मशरीरं नाग्निर्दग्धुं शक्नुयात्।

---

१.‘यमलोकजिगिमिषो’ इति मातृकायाम्।

तर्ह्यग्निसंयोगनिमित्ता यातना च न स्यादिति चेन्न, यातनायाः सर्व-शास्त्रप्रसिद्धत्वात्। यदि स्थूलं स्यात् तदा तस्य माता काचनापेक्ष्यते। असंख्यानां प्राणिनां म्रियमाणत्वादसंख्यानि च यातनाशरीराणि भवितव्यानि।

नच यमेन पूर्वमेवासंख्यानि तानि संपाद्य निक्षिप्तानीति वाच्यम् ; जीवानुप्रवेशाभावेन झटित्येव दुर्गन्धादिना जीर्णत्वसंभवात्। स्थूलतायां पञ्चीकृत-भूतकार्यत्वार्दग्निदाह्यता च प्रसज्यते इह दृष्टत्वात्।

न च तल्लोकाधिपतिर्यमो ब्रह्मविद् भवितुमर्हति-सर्वेष्वपि प्राणिषु क्रूरतरदण्डधरत्वेन दयारहितत्वात्। दयालुत्वादयो हि गुणा ब्रह्मविदो निसर्गसिद्धा इति सर्वेष्वपि वेदान्तशास्त्रेषु प्रसिद्धम्। यमस्याब्रह्मवित्त्वदोषारोपणे मन्मन-श्चाधिकं बिभेति। तस्मादत्र निश्चितार्थः सर्वज्ञेन भवतैव वक्तव्यः।

अन्ये हि केचित् सर्वशास्त्रादर्शित्वेन सन्दिग्धसिद्धान्ताः;केचित् सर्व-शास्त्रदर्शिनोऽप्यैहिकपारवश्येन तत्त्वार्थकथनालसा भवन्ति। अतो भवानेव शरणम्।

**उत्तरम्:**अत्रोच्यते- यातनाशरीरं स्थूलमेवेति। कस्मात्? सूक्ष्मे सूक्ष्मस्य प्रवेशासंभवात्। स्थूले सूक्ष्मं, सूक्ष्मे कारणं, कारणे तुर्यं च प्रविष्टमस्ति। अग्निसंयोजने तस्य स्थूलस्यादाह्यता तु यमस्य शक्तिवैचित्र्यादुपद्यते। यथा तु" न तस्य रोगो न जरा मृतिश्च प्राप्तस्य योगाग्निमयं शरीरम्।"( श्वे.उ.2.2 )इति श्रुत्या योगिनः स्थूलशरीराणि (?)तादृशमभिधीयतेतद्वत्। यातना चाचिन्त्या स्यादेव। तस्य वापि (?)प्रविष्टस्थूलदेहस्य योगाग्निसंस्कृतत्वाभावात्। न च तस्य स्थूलस्य माताऽपेक्ष्यते। यमस्याचिन्त्यशक्तिमत्त्वेन मातरं विनाऽपि तत्सृष्टिकर्तृत्वसंभवात्। यमस्य स्मृतिमात्रेणासंख्यानां स्थूलानां सद्य एवोत्पत्तिसंभवान्न दुर्गन्धादिशङ्का-ऽवकाशोऽस्ति।

यदुक्तं निर्दयत्वाद् यमोऽब्रह्मविदिति, तत् प्रत्युच्यते- न हि दक्षिण-

दिक्पालकत्वेनाधिकारिकत्वाद् यमोऽब्रह्मविदिति कथंचन वाच्यं, कठवल्ल्यादिषु नचिकेतःप्रभृतीनां तत्त्वोपदेशैः स्फुटमेव ब्रह्मवित्त्वावगमात्। न च तस्य दया-राहित्यं मन्तव्यम्। पापीतरेषु महादयालुत्वात्। यदि शिक्षाधिकारिणः पापिष्वपि दया स्यात् तदा लोकेषु पापिन एव प्रचुराः स्युः। तर्हि नरकादिषु शिक्षितानां जीवानां पुनर्भूमौ स्थितिकालेषु तद्यातनानुभवस्य गतसंवत्सरानुभूतकार्यस्येव प्रत्यक्षतां जनयेद् यदि तदा न पुनः पापानि कुर्युः। तदभावात् तन्मिथ्यात्व-निश्चयेन पुनः पापानि कुर्वन्ति।

अयं चापराधो यमकर्तृक एवेति चेन्न, श्रुतिस्मृतीतिहासपुराणानि हि यमयातनास्मारकाणि प्रत्यक्षाणि बहूनि सन्ति। तत्र प्राणिषु विश्वासहीनेषु कथं धर्मराजोऽपराधी स्यात्? तस्मादनवद्यम्।

४९.प्रश्नः:ननु लोकायतादिसाङ्ख्यान्ता जीववादिनस्त्रिणाचिकेतादियोगान्ता ईश्वरवादिनोऽद्वितीयब्रह्मवादिनश्च लोके प्रसिद्धाः। अत्र जीववादिनां मते सर्वस्य च जीवत्वादुपास्य वस्तु न किञ्चिदपि सिद्ध्यति। न ह्यधमजीव उत्तमजीवमुपा-सीतेति वाच्यं,सर्वैश्वर्यसंपन्नेनाप्युत्तमजीवेनाधमजीवानुभूयमानसर्वदुःखनिवृत्त्य-दर्शनात्। धनिकेन दारिद्र्यदुःखं निवर्त्यमानमपि रोगादिजायमानं दुःखं न निवर्तते। यदि रोगादिनिवर्तकान् भिषगादींश्चोपासीतेत्युच्यते, तदा ह्युपास्यबहुत्वा-पत्त्या सर्वलोकाधिपतेरेकत्वं न सिद्ध्यति।

तृतीयानां ब्रह्मवादिनां मते तु वस्तुतः सच्चिदानन्दलक्षणवत्त्वेनाभेद-ध्यानैरुपास्यत्वेऽप्यद्वैतत्वेऽपि च मूर्तिरहितत्वेन जीवकारुण्याद्युत्तमगुणहीनतया जीवानुभूयमानदारिद्र्यादिदुःखनिवर्तकत्वासंभवात् तदभ्युपगमरीत्याऽप्यैहिकदुःख-निवर्तकत्वं न सिद्ध्यति,मोक्षमात्रप्रयोजनाभ्युपगमात्। न हि मोक्षायैको भोगाया-न्यश्चोपास्याविति वक्तुं युक्तं, द्वयोः सार्वाधिपत्यसिद्धिप्रसंगात्। उपासकस्य

जीवस्य सर्वाण्यपि प्रयोजनानि दातुं शक्तो हि सर्वाधिपतिर्भवितुमर्हति।

यद्युच्येत-भोगस्यानित्यत्वात् तद्दाताऽन्योऽधिपतिर्माऽस्त्विति,नैतद्युक्तम्-सर्वेषामपि जीवानां वैराग्यसंभवात्। न च मोक्षेच्छुः कश्चिदपि नास्तीति वाच्यं, "मनुष्याणां सहस्रेषु"(भ.गी. 7.3. ) इत्यादिस्मृत्या कस्यचिद् वा मुमुक्षोः सत्त्वावगमात्। यद्येक एव सर्वाधिपतिः सर्वज्ञः सर्वशक्तः सर्वेषां भोगान् मोक्षं च स्वातन्त्र्येणान्यानपेक्षं दातुं शक्नुयात्, स एव उपास्य इत्युच्येत। एषोक्तिरेव समीचीना सर्वबुद्धिमद्ग्राह्या सर्वशिष्टसंमता[१] मध्यमानाम् ईश्वरवादिनां मतान-रोधिनी सर्वश्रुतिस्मृत्यादिपरमतात्पर्यानुसारिणी च स्यात्।

तथाऽप्यत्र चेश्वरवादे बहुधा विप्रतिपत्तयो लोके दृश्यन्ते। तास्तु बुद्धिमतां वैरस्यं जनयन्ति।

का नाम विप्रतिपत्तयः?

केचिद्धि सत्यलोकाधिपतिं सरस्वतीवल्लभं चतुर्मुखं ब्रह्माणमेव सर्वा-धिपतिं सर्वज्ञत्वादि[२]गुणविशिष्टमाहुः।

केचिच्च वैकुण्ठाधिपतिं लक्ष्मीवल्लभं चतुर्भुजं विष्णुमेव तादृशमाहुः।

अन्ये तु कैलासाधिपतिं गौरीवल्लभं त्रिणेत्रं रुद्रमेव तादृशमाहुः।

इतरे चैतेषां त्रिमूर्तीनामवान्तरावताररूपानेव तादृशानाहुः।

अन्ये तु त्रिमूर्तिभ्योऽन्यं तुरीयमप्यर्धनारीश्वरमाहुः।

केचिच्च तुर्यातीतमपि पञ्चमुखसदाशिवं पञ्चकृत्यवन्तमाहुः।

एवं मूर्तिचिह्नभेदवादैरन्योन्यकलहवन्तः प्राणिनः क्रोधमात्रपर्यवसन्न-विद्यापरिश्रमा वृथाजीविनो भवन्ति।

ये पुनरन्ये विराट्स्वराट्सम्राडिति स्थूलसूक्ष्मकारणसमष्टिप्रपञ्चाभि-

१.'संमतां' इति मातृकायाम्।

२.'सर्वज्ञादि' इति मातृकायाम्।

मानीश्वरत्रयवादिनः श्रूयन्ते-तेषामाद्यैरुपास्ये विराजि ब्रह्मादीनामिव करचरणाद्यवयववन्मूर्तिमत्त्वासिद्ध्याऽन्तःकरणाद्यभावेन कारुण्यादिगुणानुपपत्तिः।

तथा हि-

स्थावरजङ्गमात्मकाशेषप्रपञ्चाकारो विराड्रूपी भगवान् व्यवहारदशायां जगदाकारः, परमार्थदशायां निर्विशेषपरब्रह्माकारश्च भवति। न तु तस्य मूर्तिः क्वचिदप्यवगम्यते। एवमेव स्वराजि सम्राजि च मूर्तिमत्त्वं न सिद्ध्यति। सरस्वतीवल्लभत्वादिगुणविशिष्टेष्वीश्वरेष्वेकमेव यं कञ्चन सर्वेश्वरं वदाम इति चेत्तेषां सर्वेषामपि सर्वज्ञत्वादिवादीनि बहूनि श्रुतिस्मृतिपुराणप्रमाणान्युपलभ्यन्ते। तेषां च मनुष्याणामिव कामक्रोधादिवशादन्योन्ययुद्धादीनि चरित्राण्यल्पतरत्वमवगमयन्ति।

तर्ह्युक्तचतुर्मुखादिव्यतिरिक्तः सर्वज्ञत्वादि[१] गुणवान् मूर्तिमान् परमेश्वरो ऽवाङ्मनसगोचर एव भवितव्य इति चेन्नैतदुपपद्यते। अवाङ्मनसगोचरस्य मूर्तामूर्तोभयातीतत्वेन शशशृङ्गादिवदरूपतयोपास्यत्वफलप्रदातृत्वाद्यसंभवात्। भोगमोक्षात्मकं फलद्वयं हि मूर्तिमानेव दद्यात्।

तस्माच्छ्रुतिस्मृतिपुराणात्मकानि श्रुतियुक्त्यनुभवात्मकानि च प्रमाणानि सम्यग् विचार्य निश्चितार्थेन सद्गुरुणा भवता चतुर्मुखादिचिह्नोपेतः सर्वज्ञत्वादिगुणविशिष्टो दिव्यमङ्गलविग्रहः परमेश्वरो वक्तव्य इति।

**उत्तरम्:** अत्रोच्यते। अस्य प्रश्नस्य प्रतिवचनवक्ता न कोऽपि लोकेऽभूत्, भवति, भविष्यति वा। सहस्रवदनेन सर्वशास्त्रार्थवित्राऽऽदिशेषेणापि[२] वक्तुमशक्यत्वात्। यदि श्रुत्यादिप्रमाणानुसारी प्रश्नो भवेत्तदा प्रतिवचनवक्तारो बहवो महान्तः समुपतिष्ठेरन्। एवमप्रमाणानुसारिणः प्रश्नस्य प्रतिवचनं को नु ब्रूयात्? तथाऽपि भवद्वात्सल्यपरवशेन मयाऽत्रापि निश्चितार्थ उच्यते।

१. 'सर्वज्ञादि' इति मातृकायाम्।
२. 'शेषेनापि' इति मातृकायाम्।

ईश्वरवादे बहुधा विप्रतिपत्तयः सन्तु नाम। भोगमोक्षोभयेच्छुर्जीवः सरस्वतीवल्लभादिषु पूर्वोक्तेषु यं कञ्चिदेव सर्वेश्वरं मत्वा श्रुत्यादिप्रमाणानु-रोधेनोपासीत। न तद्व्यतिरेकेण मूर्तिमान् परमेश्वरोऽन्योऽस्ति। यद्यन्यं यं कञ्चन स्वकपोलकल्पनेन वदिष्यामस्तदा तस्य च मूर्तिचिह्नानामवश्यवक्तव्यत्वात् पूर्ववद् विप्रतिपत्तिरेव स्यात्, तद्वादिनां चान्यैः कलहो भवेत्।

यदुक्तं मनुष्याणामिव ब्रह्मादीनामपि कामक्रोधादिमत्त्वमन्योन्ययुद्धा-दिकं च श्रुत्यादिष्ववगम्यत इत्यादि। तत् प्रत्युच्यते- नायं दोषः- ते कामादिपारवश्य-मभिनयन्ति केवलं, त तु सज्जन्ते। यद्वा सज्जन्तां नाम, स्वस्वाधिकारनिर्वाहार्थ-कत्वाद् युद्धाद्यासक्तेरधिकारावसाने कैवल्यं नोपरुध्यते।

न च तेषां ब्रह्मादीनामीश्वराणां भोगमोक्षोभयेच्छुभिरुपास्यत्वोपरोधो-ऽस्ति, आधिकारिकत्वेन सर्वज्ञत्वाद्यशेषगुणविशिष्टत्वात्, परब्रह्मपरोक्षानुभवत्वाच्च। अत्रैवं सतीश्वरवादीयविप्रतिपत्तयः कथं बुद्धिमतां वैरस्यं जनयेयुः?

ननु ब्रह्मादिष्वेकस्य केवलं सर्वाधिपतित्वेऽभ्युपगम्यमाने तदितरेषां सर्वा-धिपत्यवादीनि प्रमाणानि व्याकुप्येरन्निति चेन्न- त्वत्परिगृहीत एक एव परमेश्वर-स्तदितरेश्वररूपैरैन्द्रजालिकविद्वानिव जीवान् मोहयितुं क्रीडत इत्यभ्युपगमे प्रमाणान्तरव्याकोपासंभवात्।

कथं तर्हि महाकारुणिकस्य जनव्यामोहयितृत्वं युक्तं-स्वपारमार्थिक-स्वरूपप्रदर्शनेन सर्वेषामपि जीवानामविशेषेण भोगमोक्षप्रदानं हि कारुण्यलक्षण-मिति चेन्नैष दोषः-सगुणनिर्गुणसमुच्चयोपासकानां परमेश्वरः स्वकीयमुभयात्मकं स्वरूपं करुणया प्रदर्शयन्[१] किञ्चिदधिकारपदं नीत्वा भोगमोक्षोभयफलप्रदानेन कृतार्थताम् आपादयतीत्यतोऽनीश्वरोपासकान् लौकिकविद्यामात्रेण पण्डितंमन्य-मानानां मूर्खाणां केवलं मायावीव व्यामोहयतीत्यवगन्तव्यम्। तथा च "वैषम्य-

१.'प्रदर्श्ययन्' इति मातृकायाम्।

नैर्घृण्ये न सापेक्षत्वात् (ब्र.सू.2.1.34)" इति सूत्रकारस्तत्तज्जीवकर्मसापेक्षमेव परमेश्वरं फलं निदध्यादित्याह। एवं सति स सर्वेषामपि सुकृतिनामसुकृतिनाञ्चाविशेषेण भोगमोक्षौ न ददातीति दोषमारोपयितुं कः शक्नुयात्?

पारमेश्वरे स्वरूपे सप्रमाणं सहस्रधोपदिष्टेऽपि सन्दिग्धमनसां केवलदुस्तर्कजटिलाशयानां पापिनामपि भोगमोक्षार्थिकां कृपादृष्टिं स न करोतीति न कोऽपि ब्रूयात्। लौकिकेन राज्ञाऽपि दुष्टनिग्रहशिष्टपरिपालनयोरेव कर्तव्यत्वेन सर्वत्र प्रसिद्धत्वात्। न चान्याय्यया सर्वसमबुद्ध्या परमेश्वरे पापिषु भोगमोक्षोभयकृपादृष्टिं कुर्वत्यपि, पापिनस्तत्फलद्वयं कथञ्चिदपि विन्देरन्।

अन्धो हि कण्ठे हि निक्षिप्तां मालतीस्रजमप्यहिं मन्यमानो रभसाद् दूरमेव परित्यजति। तद्वद् दुर्भगशिरोमणिषु कुतर्कवादिषु परमेश्वरकृपया किं प्रयोजनम्?

ननु परमेश्वरः कश्चन वर्तते ।स एतादृशमूर्तिमानिति न जानीमहे। तत्कृपया तु वयं भोगमोक्षाधिकारिणो[1] भवेम, तदधीनत्वादस्माकं तत्प्रणीतशास्त्रानुरोधेन पापभीरुत्वं भवितव्यमिति प्रज्ञा किं नालमिति चेत्, किमनया प्रज्ञया फलं स्यात् ?

परमेश्वरस्य कृपा हि तदीयदिव्यमङ्गलविग्रहध्यानात् तदीयदिव्यचरितस्तोत्रात् तदीयप्रतीकपूजनाच्च स्वयमुत्पद्यते। एतच्च करणत्रयकर्तृकोपासनं वर्णाश्रमाचारांश्चापेक्षत इत्येतमर्थं सर्वसम्मतं विजानीहि।

५०.प्रश्नः: ननु"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः"(बृ.उ.4.5.6)इति बृहदारण्यकश्रुत्युक्तं परमात्मसम्यग्दर्शनार्थकं श्रवणादिचोदनात्रयं किं सर्वमुमुक्षुत्वविशेषेण प्रवृत्तम् आहोस्विन्मुमुक्ष्वेकदेशाभिप्रायेण

१.'कारिणौ' इति मातृकायाम्।

प्रवृत्तमिति संशये सति, उत्तमाधिकारिणां सकृन्महावाक्यार्थश्रवणमात्रेण सम्यग्दर्शनसंभवान्मन्दाधिकारिणामेव मनननिदिध्यासनात्माकावृत्तिसापेक्षत्वेन सार्वत्रिकत्वविधानानुपपत्तेश्च मुमुक्ष्वेकदेशाभिप्रायेणैव प्रवृत्तमिति युक्तम्। "आवृत्तिरसकृदुपदेशात्" (ब्र.सू.4.1.1)इति ब्रह्मसूत्राधिकरणे च भाष्यकारैरसकृच्छ्रवणवादः सुतरां दृढीकृतोऽस्ति। छान्दोग्ये श्वेतकेतवे प्रवृत्तः"तत्त्वमसि"(छां.उ.6.8.7) इति नवकृत्व उपदेशश्च मनननिदिध्यासनलिङ्गको मन्दाधिकारिविषय एव। नच सकृद्वाक्यार्थश्रवणमात्रेण सम्यगवगतब्रह्मात्मभावस्य कुशाग्रबुद्धेरुत्तमाधिकारिणः पुनरभ्यासविधानं युज्यते। तण्डुलनिष्पत्तिपर्यन्तस्यैवावघातस्य विहितत्वात्।

यद्यप्यज्ञानसंशयविपर्ययाख्यप्रतिबन्धत्रयनिवृत्त्यर्थमेव श्रवणादित्रयं विधीयते। तथाऽपि प्राक्तनपुण्यविशेषैर्निष्कृतिबन्धस्योत्माधिकारिणः सकृच्छ्रवणमात्रेण चारितार्थ्यसंभवादावृत्त्यनुपयोगः। ननु श्रवणादित्रयं विधीयत इत्यनुपपन्नं, विधेः कर्मविषयत्वेन ब्रह्मविषयत्वाभावात्।

अत्रोच्यते । नायं दोषः-लिङ्लोडादीनामिव तव्यप्रत्ययस्य च परैर्विधित्वाङ्गीकारात् तदनुरोधेनाभिहिते वचनेऽनतिशङ्कनीयं विधिच्छायापन्नमित्येव निर्धारितत्वात्। नच कर्मब्रह्मणोरविशेषेण विधिगोचरत्वं वक्तुं शक्यं, वेदवेदान्तयोरधिकारिसंबन्धविषयप्रयोजनानाम् अनुबन्धानां भिन्नत्वात्।

यद्यपि "कर्ता शास्त्रार्थवत्त्वात्"(ब्र.सू.2.3.33)इति सूत्रकारेण ब्रह्मज्ञानाधिकारिणोऽपि कर्तृत्वाभ्युपगमवशात् कर्मापेक्ष्यत इत्याशङ्कीत। तथाऽप्यकर्त्रात्मावबोधनेन कर्तृत्वस्य निवर्त्यमानत्वान्न कर्मापेक्षाऽस्ति। न चावगतब्रह्मभावस्य क्रियानुप्रवेशोऽस्ति, दूरीकृतसर्वकर्मत्वात्।

ननु तत्त्वमस्यादिवाक्यार्थश्रवणमात्रेणावगतब्रह्मात्मभावस्यापि बाह्येन्द्रियविविधव्यापारानुमेयचित्तविक्षेपदर्शनाद् ब्रह्मविद्यानन्दावाप्त्यर्थकमनोनाशसिद्ध्यै निदिध्यासनात्मकमुपासनमवश्यकर्तव्यमिति चेदत्रोच्यते-

मनो नाम पाञ्चभौतिकमनित्यमित्येक आहुः। भ्रान्तिजमसत्यमित्यन्ये। एवमुभयथाऽपि तन्नाशाय न साधनमन्वेष्टव्यम्। कुतः? आद्यपक्षे प्रारब्धक्षयसमकालं स्वयमेव मनोनाशसंभवात्। द्वितीये स्वप्नव्यापारस्यैव मिथ्यात्वेन प्रयोजनाभावाच्च।

यद्यपि प्रारब्धदेहपातपर्यन्तं ब्रह्मविदाऽपि दुःखमनुभूयेतेति ब्रूयात्- आस्तां नाम। न तावता कैवल्योपरोधोऽस्ति। न वा ब्रह्मविदः स्वदृष्ट्या क्वचिदपि दुःखं प्रतीयते।

परदृष्ट्या प्रतीयमानेन तु दुःखेन ब्रह्मविदो न किञ्चिच्छिद्यते।

तस्मान्मनोनाशकसाधनान्वेक्षणमपि भ्रान्तविषयमिति मन्तव्यम्।

ननु "तत्त्वमसि"(छां.उ.6.8.7)वाक्यार्थश्रवणमात्रेण परोक्षतो जानाति केवलं, न त्वपरोक्षतोऽनुभवतीति चेन्न, अस्ति ब्रह्मेति ज्ञानस्यैव परोक्षत्वप्रसिद्धेः। अहं ब्रह्मास्मीति ज्ञानं ह्यपरोक्षं सर्ववेदान्तप्रसिद्धमनुभवात्मकं श्रवणमात्रेणोत्तमस्योऽदितमस्ति।

अतो ब्रह्मात्मैक्यापरोक्षानुभवसिद्ध्यर्थकसकृच्छ्रवणवादोपपत्तिः।

**उत्तरम्:** उत्तमोत्तमाधिकारिणामपि सकृन्महावाक्यश्रवणेन सम्यग्दर्शनासंभवान्मनननिदिध्यासनात्मकावृत्तेः सार्वत्रिकविधानमुपपद्यत एव। "आवृत्तिरसकृदुपदेशात्"(ब्र.सू.4.1.1.)इत्यधिकरणे भाष्यकारैः केवलं सकृच्छ्रवणवादः सुतरां दृढीकृतः। न तु भामतीकारैर्वाचस्पतिमिश्रैः सूत्रकारैर्वा[1]। यदि प्राक्तनपुण्यविशेषैः

1.द्वाविंशे प्रश्नोत्तरे श्रुत्यनुक्तस्यापि तत्त्वविभागकथनस्य पण्डितैरभ्यूहनीयत्वं स्वयम् अङ्गीकर्तुर्ग्रन्थरचयितुः सूत्रानुक्तविचाराभ्यूहनं न सहनीयतामेतीत्यतिविचित्रमिदम्। वाचस्पतिमिश्रानुक्तत्वप्रमाणं यदुपन्यस्यत्ययम् आवृत्त्यावश्यकत्ववादद्रढिम्ने, तदत्यन्तमुपहासास्पदं, 'व्याख्याकृदनुसारेण मूलग्रन्थकृद् ग्रन्थं रचयेत्'इत्यपूर्वनियमश्रावणात्!!

प्रतिबन्धक्षयोऽभूत्, तदा सद्य एव कैवल्यसंभवान्न पुनर्जन्मावकाशोऽस्ति। मनन-निदिध्यासनयोरेव च प्रतिबन्धनिवर्तनेऽनितरसाधारणसाधनत्वं पराशर आह- "भावना विपरीता या या च संभावना शुक! कुरुते प्रतिबन्धं सा खलु ज्ञानस्य नापरम्। मननाच्च तथैकाग्र्यान्निदिध्यासनलक्षणात्। भावने द्वे निवर्तेते निवृत्त्यैव तथाऽनघ। ज्ञानमप्रतिबद्धं सत् सद्यः कैवल्यदं भवेत्।"(पराशरस्मृतौ?) इति।

वस्तुतस्तु "प्रत्ययावृत्तिः कर्तव्या-कुतः-असकृदुपदेशात्। 'श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इत्येवञ्जातीयको ह्यसकृदुपदेशः प्रत्ययावृत्तिं सूचयति। ननूक्तं यावच्छब्दमेवावर्तयेन्नाधिकमिति,न-दर्शनपर्यवसितत्वादेतेषाम्। दर्शनपर्यवसानानि हि श्रवणादीन्यावर्तमानानि दृष्टार्थानि भवन्ति, यथाऽवघातादीनि तण्डुलादिनिष्पत्तिपर्यवसानानि, तद्वत्।"[=श्रवणादि-कृत्यस्यासकृदुपदेश एव प्रत्ययस्यानेकश आवृत्तिं स्पष्टमादिशति। एषा चावृत्तिरात्मदर्शनपर्यनन्तमनुष्ठेया। यथा व्रीहाववघातस्तुषविमोचनपूर्वकं तण्डुलाभिव्यक्तिपर्यन्तं करणीयः।]इति भाष्यं सिद्धान्तपक्ष एव विद्यमानमविगणय्य वा (अविज्ञाय वा?) विचित्रतरं वदति ग्रन्थकृत्। अपि च "लिङ्गाच्च"(ब्र.सू. 4.1.2)इत्यत्र "भेदानर्थक्यं तं प्रति यस्तत्त्वमसीति सकृदुक्तमेव ब्रह्मात्मत्वमनुभवितुं शक्नुयात्। यस्तु न शक्नोति तं प्रत्युपयुज्यत एवावृत्तिः।"इति स्पष्टतरां भाष्यगिरां न कटाक्षितवानेषः। उत्तमाधिकारिणामप्यावृत्तिं निर्बध्नन्नयं वेदान्तभाष्यकाराणाम् अक्षरा-भ्यासमाज्ञापयतीव! "सर्वदुःखविनिर्मुक्तचैतन्यात्मकोऽहमित्येष आत्मानु-भव"इति भाष्यम्। तादृशानुभववतः निदिध्यासनविधिः कथङ्कारमुपपद्येत? आस्तां नामैतत्। प्रकृतग्रन्थपीठिकाभागस्थे पञ्चमे श्लोके प्रकृतस्यैव ग्रन्थस्य सकृद्दर्शनेन मुक्तिसिद्धिप्रतिज्ञां 'त्रिः'कृतवतो महाभागस्यास्य सकृच्छ्रुते-नौपनिषदेन वाक्येन मुक्तिः सिद्ध्यतीत्यङ्गीकारे किं नाम धर्मसंकटम्? स्वविरचितो ग्रन्थ औपनिषदमपि वाक्यमत्येति मुक्तिरूपदायकत्व इति किमेतदीयमाकूतम्?

अतः सकृच्छ्रवणमात्रेण चारितार्थ्यमित्यसंगतम्।

श्रवणमात्रेणावगतब्रह्मभावस्य परोक्षज्ञानित्वेन नाग्निहोत्रादिबाह्य-क्रियायामपि प्रवेशसिद्धौ कैमुतिकन्यायेन निदिध्यासनाख्यकान्तरकर्मप्रवेशः सिद्ध्यति। विदुषोऽपि निदिध्यासने नियोज्यमानत्वाद् विधिच्छायावचनं वृथैव। मनश्चानित्यमसत्यं वाऽऽस्ताम्। उभयथाऽपि तन्नाशाय साधनान्वेक्षण मावश्यकमेव। प्रारब्धक्षयसमकालं स्वयमेव मनश्च नश्यतीत्येषोऽभ्युपगमो हि चार्वाकाणां प्रसिद्धः। स्वप्नव्यापारस्येव मिथ्यात्वापादानं तु साहसमात्रं स्यात्। मनोनाशसिद्धौ कैवल्यमुपरुध्येतैव। संकल्पादिवशाज्जन्मान्तर संभवात्। यद्यपि श्रवणमात्रेण अहं ब्रह्मास्मीत्यपरोक्षज्ञानमुद्भवेत्, न त्वपरोक्षानुभवः। निदिध्यासनानितरसाध्यत्वाद् अपरोक्षानुभवस्य। न च कर्मण इव ब्रह्मणो विधिगोचरत्वान्नास्तीति वाच्यम्, अधिकार्याद्यनुबन्धभेदेऽपि वेद इव वेदान्ते च लिङ्गदिदर्शनाद् बाह्याभ्यन्तरभेदेन वा साधनानामनुष्ठेयाविशेषाच्च। न चाकर्त्रात्मावबोधनमात्रेण कस्यचिदपि कर्तृत्वं नि-वर्तेत। अवबोधनानन्तरीय ध्यान योगा भ्यासजनितस्वानुभवेनैव निवर्त्यत्वात्।

यदुक्तं परमात्मसम्यग्दर्शनार्थकं श्रवणादिचोदनात्रयमिति, तत् प्रत्युच्यते-न हि द्रष्टव्य इति प्रथमदर्शनं परमात्मविषयकं भवितुमर्हति। चोदनाम-नतिलङ्घ्य चोदितेन दृष्टे सति श्रवणाद्युत्तरचोदनानां वैयर्थ्यप्रसंगात्। न हि परमात्मानं सम्यग् दृष्टवत उपरि साधनापेक्षाऽस्ति। न च दर्शनस्य साध्यत्वं श्रवणादीनां साधनत्वं चावाधारयितुं श्रुतिलिङ्गादिकं किञ्चिदस्ति। अविशेषेणैव तव्यप्रवाहपठितत्वेन दर्शनस्यापि श्रवणाङ्गभूतसाधनत्वसंभवात्। यथा श्रवणादीनां त्रयाणामुत्तरोत्तराङ्गित्वेन पूर्वपूर्वाङ्गत्वं प्रसिद्धं तद्वत्। अतः श्रवणात् प्राक् तर्तव्यं दर्शनं चित्तशुद्ध्यर्थम् अक्ष्याद्यायतनस्थप्रत्यगात्मविषयकं मन्तव्यम्।

तथा च तत्रोक्तदर्शनस्य साधनरूपत्वं तत्रान्यवचनान्येव (तत्रत्यानि वचनान्येव?)स्फुटमवगमयन्ति। "आत्मनो वा अरे दशनिन श्रवणेन मत्या विज्ञानेन सर्वमिदं विदितं भवति(बृ.उ.2.4.5)" - इति। अत्र तृतीयान्तनिर्देशस्य समानत्वाद् दर्शनं च साधनमेवेति सिद्धम्। परमात्मसम्यग्दर्शनसाध्यं तु निदिध्यासनानन्तरं स्वयमेव सेत्स्यतीति न निर्देष्टव्यम्। न च श्रवणमात्रेण तत् कस्याप्युत्पद्येते-त्यवोचाम। तस्मात् सकृच्छ्रवणवादानुपपत्तिः।

५१.प्रश्नः:प्रपञ्चितपूर्वेऽपि जीवन्मुक्तिवादे[1] प्रष्टव्यांशस्य विद्यमानत्वात्

---

1.द्रष्टव्ये पञ्चत्रिंशे(35)प्रश्नोत्तरे। अतीव दुर्बलोऽयं सिद्धान्तवेषधारी पूर्वपक्षो ग्रन्थकृतः। द्रष्टव्यत्वस्य वेदान्तवाक्ये प्रथमपरिपठितत्वमेवा दसीयानां सर्वासां कल्पनानां मूलम्। बृहदारण्यक भाष्यीयं- "श्रोतव्यः पूर्वाचार्यत आगमाच्च। पश्चान्मन्तव्यस्तर्कतः, ततो निदिध्यासितव्यो निश्चयेन ध्यातव्यः। एवं ह्यसौ दृष्टो भवति श्रवणमनननिदिध्यासन साधनैर्निर्वर्तितैः। (2.4.5)"इति वाक्यं,"किमर्थानि तर्हि-आत्मा वा अरे द्रष्टव्यः श्रोतव्यो निदिध्यासितव्यः-इत्यादीनि **विधिच्छायानि** वचनानि ? स्वाभाविकप्रवृत्तिविषयीविमुखीकरणार्थानीति ब्रूमः। (2.4.6)" इति च वाक्यमत्र विशेषतः सुधीभिः परिशीलनीये स्तः। अपि च योगाभ्यासीये यस्मिन् कस्मिंस्तरे वर्तमानेन साधकेन भ्रुवोरन्तरे दृश्यमानस्य ज्योतिष एव बृहदारण्यकोपनिषदुक्तात्मत्वमेषोऽभिप्रैति! यदि श्रोतव्यादिवाक्ये वर्तमानानां पदानां यः क्रमस्तेनैव क्रमेण साधनानुष्ठानमनिवार्यं , ईशोपनिषद एव प्रथमाध्येयत्वम् उपनिषदां नामसूच्यां कैवल्योपनिषदि पठितानां मध्ये तस्या एव प्रथममुल्लेखादि-त्यायाति । अपि च येषां सिद्धा सर्वत्रात्मैकदर्शिता तेषामेव कर्मकाण्डा-धिकार इत्यपि सिद्धान्ताङ्गीकारप्रसंगः, ईशावास्ये 'ईशावास्य मिदम्' इति प्रथमेन मन्त्रेण तस्या एवोक्तत्वात्।

पुनरपि पृच्छ्यते।

सालोक्यसारूप्यसामीप्यसायुज्याख्यकचतुर्विधमुक्त्यतीता[1] पञ्चमी कैवल्यमुक्तिरपि द्विविधा शास्त्रप्रसिद्धा-क्रममुक्तिः सद्योमुक्तिरिति। तत्राद्या- "वेदान्तविज्ञानसुनिश्चितार्थाः"(मुण्ड.उ.3.26,भवसं.उ.3.33,महाना.उ.8.14) इति, "शतं चैका च हृदयस्य नाड्यः" (कठ.उ.6.16,छां.उ.8.66,यो.शि.उ.6.44) इति चैवंजातीयकश्रुतिनिर्धारिता ब्रह्मलोकक्रमेण भवति। द्वितीया तु "अत्र ब्रह्म समश्नुते"(बृ.उ.4.4.7,कठ.उ.6.14)इति, "अत्रैव समवलीयन्ते[१]"(बृ.उ.3.2.11) इति, "इह चेदशकद् बोद्धुं[२]"(कठ.उ.6.4 )इति,"इह चेदवेदीदथ सत्यमस्ति" (केन.2.13) इति,"विद्यमाने शरीरेऽस्मिन् न शक्तो बोद्धु[३]मीश्वरम्"(?)इति, "अहिनिर्ल्वयनी वल्मीके प्रत्यस्ताशेते"(बृ.उ.4.4.7 )इति चैवञ्जातीयकानन्त-श्रुतिनिर्धारिताऽस्मिन् देहे जीव एव भवति।

तर्ह्येवमनन्तश्रुतिप्रसिद्धां जीवन्मुक्तिं द्वैतिविशिष्टाद्वैतिप्रभृतयः कुतः प्रतिषेधन्तीति चेत्, ब्रह्मवित्स्वपि व्यवहारदर्शनात् बहुश्रुत्युक्ताऽपि सा मुक्तिरौप-चारिकीति मन्यते- यथा च "साक्षी चेता केवलो निर्गुणश्च"(श्वे.6.11)इति, "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्"(श्वे.6.19 )इति चैवंजातीयक-श्रुतीनाम् अप्राकृतगुणविशिष्टमित्यादिव्याख्यानैः सगुणपरत्वमापाद्य न वस्तुनो

1. "लोकेषु विष्णोर्निवसन्ति केचित् सामीप्यमिच्छन्ति च केचिदन्ये। अन्ये तु रूपं सदृशं भजन्ते सायुज्यमन्ये स तु मोक्ष उक्तः।" इतीदं पाञ्चरात्रानुयायिना केनचिद् रचितं पद्यं वेदान्तदेशिकप्रणीतायां तत्त्वमुक्ताकलाप-सर्वार्थसिद्धावुद्धृतम्। (2.67)

१. 'समवतीयन्ते' इति मातृकायाम्।
२. 'चेदशक आबोद्धुम्' इति मातृकायाम्।
३. 'वोद्ध' इति मातृकायाम्।

नैर्गुण्यं सहन्ते। तथैव जीवन्मुक्तिमपि स्वानधिकारादिति मन्तव्यम्। न च तेष्वत्यन्तमनभिज्ञत्वं वक्तुं युक्तम्।

केचिद् ह्यद्वैतिनः "स तत्र पर्येति च जक्षद् क्रीडद् रममाणः स्त्रीभिर्वा यानैर्वा"(छा.उ.8.12.1 )इत्यादिकां श्रुतिं ब्रह्मलोकानुभूयमानैश्वर्यार्थिका[१]-मविज्ञायात्रैव जीवन्मुक्तार्थिकां[२] विदित्वा भक्ष्याभक्ष्याविभागहीनाः स्वेच्छमा-चरन्ति[३]। तानालोक्य जीवन्मुक्तिवादं परिहसत्सु द्वैत्यादिषु का वाऽनभिज्ञताऽस्ति?

तथापि "यस्मान्नोद्विजते लोका लोकान्नोद्विजते च यः। हर्षामर्षभयो-न्मुक्तः स जीवन्मुक्त उच्यते"(भ.गी.12.15) इत्याद्यनेकश्रुतिस्मृतिप्रसिद्धाया जीवन्मुक्तेर्न केनचिदपि दोषं स्थापयितुं शक्यम्[1]।

जीवतोऽपि हि ब्रह्मविदः व्यवहारादिकं दग्धपटभर्जितबीजादिवत् प्रतीय-मानं पुनर्जन्मकार्यासमर्थं प्रसिद्धम्। न च तस्य प्रारब्धदेहपातानन्तरं गन्तव्यं लोकान्तरं क्वचिदपि विधीयत उत्क्रान्त्यादिप्रतिषेधदर्शनात्।

---

1.वस्तुतस्तु ग्रन्थकर्ता जीवन्मुक्तिसिद्धान्तं न चिखण्डयिषति। 'जीवन्मुक्तो-ऽस्मि' इति स्वान् ख्यापयतो निषिद्धाचारान् अपहसन्तो द्वैतिनो नापराद्धा इत्येव प्रतिपिपादयिषति। निषिद्धभक्षणं रागविषयं न पुनर्जीवन्मुक्ति-विषयम्। रागिभिः पामरैर्मुक्तानां सादृश्यस्य सूचनं स्थूलदृश्वत्वं सूचयति तथावादिनाम्। मुक्तवन्नटनं कुर्वाणानां, स्वपक्षानुकूलत्वेन श्रुतिवचनार्थान् विपरिणमयितॄणां धूर्तानां वा कुसृतेः वेदान्तित्वरूपधर्मधारणविप्रतिषेधार्थं जीवन्मुक्तिसिद्धान्तस्यैव विधूननमुपहासास्पदं, शिरःशूलनिवारणार्थं शिरश्छेद इति न्यायाश्रयणप्रसंगश्च। अननुष्ठितध्यानादिसाधना अपि केचन शमदमादियुता लक्ष्यन्ते। परन्तु कोऽपि तान् गुरून् न मन्यते।

---

१.'र्यार्थिका' इति मातृकायाम्।
२.'क्तार्थिकां' इति मातृकायाम्।
३.'स्वेच्छं चरन्ति' इति मातृकायाम्।

ननु "स यदि पितृलोककामी भवति,संकल्पादेवास्य पितरः समुत्तिष्ठन्ति[१]"(छा.उ.8.2.1)इत्यादिश्रुतिभ्यो ब्रह्मलोकं गतस्य मुक्तस्य पितृसमुत्थानाद्यैश्वर्यमणिमाद्यैश्वर्याणि चाभिधीयन्ते। तथा चेदिह ब्रह्मविदः स्युस्ततः प्रत्यक्षफलत्वाज्जीवन्मुक्तिर्वास्तवी इत्यभ्युपगच्छेम। न हि स्वल्पाऽपि सिद्धिर्ब्रह्मवित्स्विह दृश्यते। पूर्वे तु वसिष्ठादयो महान्तोऽणिमादिसकलसिद्धिमत्त्वाद् ब्रह्मविदो जीवन्मुक्ता इति युक्तमवगन्तुं, सिद्धीनामेव मुक्तलक्षणत्वात्।

यद्यप्यन्नपूर्णाद्यासूपनिषत्सु मुक्तिविरोधिन्यः सिद्धय इत्युच्यन्ते-"द्रव्यमन्त्रक्रियाकालयुक्तयः साधुसिद्धिदाः। परमात्मपदप्राप्तौ नोपकुर्वन्ति किञ्चन।" (अन्नपू.उ.4.6 वराह.उ.3.29)"सर्वेच्छाकलनाशान्तौ मोक्षलाभोऽभयाभिधः। स कथं सिद्धिवाञ्छायां कथमर्हत्यचित्तकः?"( अन्नपू.उ.4.8 ) इत्यादिश्रवणात्। तथाऽपि तादृशसिद्धिदूषणस्य द्रव्यादिसाध्यकृत्रिमसिद्धिविषयत्वात् स्वयमुत्पद्यमानाकृत्रिमसिद्धिविषयत्वं न कथंचन वाच्यं;तस्मात् सिद्धिरहिता मनुष्या अजीवन्मुक्ता एव मन्तव्या इति।

उत्तरम्: नहि जीवन्मुक्तेरणिमादिसिद्धयो लक्ष्माणीति वाच्यं; शान्तिदान्त्यादिगुणानामेव तल्लक्ष्मत्वप्रसिद्धेः। पूर्वे तु वसिष्ठादय आधिकारिकत्वात् सिद्धिमुक्त्युभयवन्तः प्रसिद्धाः। तत्पूर्वजन्मसु सकामनिष्कामतपसामधिकारोद्देशेन कृतत्वात्। निष्कामतपोमात्रवतां तु मुक्तिमात्रेच्छूनाम् अधिकाराभावादणिमादिसिद्धिवर्जिता जीवन्मुक्तिर्भवितुमर्हति।

सिद्धयश्चाधिकारवर्जितानां मोक्षप्रतिबन्धिन्यो विश्रुताः अन्नपूर्णोपनिषदाद्यासु श्रुतिषु "द्रव्यमन्त्रक्रियाकालयुक्तयः साधुसिद्धिदाः। परमात्मपदप्राप्तौ नोपकुर्वन्ति किञ्चन।"( अन्नपू.उ.4.6)" सर्वेच्छाकलनाशान्तौ मोक्षलाभोऽभया-

---

१. 'समुत्थिष्ठन्ति' इति मातृकायाम्।

भिधः। स कथं सिद्धिवाञ्छायां कथमर्हत्यचित्तकः?" ( अन्नपू.उ.4.8 )अपि शीतरुचावर्के सुतीक्ष्णेऽपीन्दुमण्डले । अप्यधः प्रसरत्यग्नौ जीवन्मुक्तो न विस्मयी। (अन्नपू.उ.4.9 )ये केचन जगद्भावास्तानविद्यामयान् विदुः। कथं तेषु किलात्म-ज्ञस्त्यक्ताविद्यो निमिज्जति?"(अन्नपू.उ.3.28)इत्येवमनन्तश्रुतिदर्शनात्।

सिद्धिव्यामोहमन्तरेणैव मुमुक्षुभिर्ब्रह्मविचारः कर्तव्यः। ब्रह्मलोकं गतस्य तु ब्रह्मविदस्तादृशैश्वर्योपभोगहेतुभूतोपासनादीनां भूमौ कृतपूर्वत्वात् तत्र तत्फलं युज्यते। अत एव खलु तस्य सद्योमुक्तिरनवाप्ताऽभूत्। "कार्यात्यये तदध्यक्षेण सहातः पारमभिध्यानात्"(ब्र.सू.4.3.10)इति सूत्रानुरोधेन द्विपरार्धावसानककैवल्यविलम्ब-द्वारा स्वामिभृत्यन्यायेन तत्रेशित्रीशितव्ययोर्ब्रह्मब्रह्मविदोः सुखदुःखसंभवाद् दुःखभूयिष्ठैव क्रममुक्तिरित्यूहापोहविचक्षणा महान्तः क्रममुक्त्युपेक्षापुरःसरं सद्योमुक्त्यर्थकं हठराजयोगविलक्षणं निर्गुणब्रह्मैकगोचरं ज्ञानयोगं केवलमनु-तिष्ठन्ति। संकल्पमात्रेण वासनानुरोधिना स्वयमेवोत्पद्यमानेन केनचित् सिद्धिविशेषेण च स्वनिष्ठायाः प्रत्यवायभिया न बहिरात्मानं प्रकटयन्ति। ब्रह्मसूत्रकारश्च-"अना-विष्कुर्वन् अन्वयात्"(ब्र.सू.3.4.50)इत्यमुमेवार्थं प्रबलयति।

तस्मात् सिद्धिप्रकाशं विनैवोपशान्ताशेषकरणव्यापारस्य सद्य एव कर्तृ-त्वादिसंसारबन्धविनिर्मुक्तत्वाज्जीवन्मुक्तिवाद उपपद्यते[१]।

द्वैतिविशिष्टाद्वैतिषु तु न कियानपि दोषोऽस्ति। कुतः-स्वेच्छाचारं विना वर्तमानैरपि हि जीवन्मुक्तवादिभिरद्वैतिभिः सगुणात् परमतीतमपरं च निर्गुणं सप्रतियोगिकं न क्वचिदपि जीवन्मुक्तिस्वरूपमभिहितं, यद्देहपातानन्तरं सेत्स्यति, तदेवारूपं ब्रह्मात्रानुभवार्हमिति निरङ्कुशमेवाद्वैतिरभिधीयमानत्वात्[1]।

1.एष मिथ्याभियोगः। कस्मिन् ग्रन्थेऽद्वैतिभिः प्रणीते अ.शि.उद्धृतानि वाक्यानि वर्तन्त इति दर्शयितव्यम्। "अशरीरं वाव सन्तं न प्रियाप्रिये

१.'उपपद्यन्ते' इति मातृकायाम्।

न चेह जीवन्मुक्तानाम् अकृत्रिमसिद्धयोऽपि भवितुमर्हन्ति। सगुणोपासकतायाः सर्वथा गलितपूर्वत्वात्।

यस्मिन्नुपास्ये ये धर्मा वर्तन्ते तदुपासकस्य त एव हि धर्मा भवेयुर्नान्ये। निर्गुणे तु ब्रह्मण्युपास्ये शान्तत्वादय एव धर्माः प्रसिद्धा नाणिमादिसिद्धयः। त एव च शान्त्यादय इह जीवन्मुक्तस्य भवितव्याः। वसिष्ठादयस्त्वाधिकारिकत्वान्नोदाहरणीया इत्यवोचाम।

तस्मात् सिद्धिविषयकभ्रमलेशमपि विना ब्रह्मात्मैक्यानुसंधानमेव सर्वदा कार्यमिति।

५२.प्रश्नः तर्हि सगुणं निर्गुणमतीतं चेति त्रिविधब्रह्मवादिनां जीवन्मुक्तिविदेहमुक्तिसिद्धावप्येकमेवाद्वितीयं ब्रह्मेत्यादिश्रुत्यनुसारित्वाद् द्वैतिविशिष्टा-

---

स्पृशतः (छां.8.12.1)"इति छान्दोग्यवाक्यमुद्धृत्य "इति प्रियाप्रियस्पर्शनप्रतिषेधाच्चोदनालक्षणधर्मकार्यत्वं मोक्षाख्यस्य अशरीरत्वस्य प्रतिषिध्यते".....“शरीरे पतितेऽशरीरत्वं स्यान्न जीवत इति चेन्न, सशरीरत्वस्य मिथ्याज्ञाननिमित्तत्वात्। न ह्यात्मनः शरीरत्वाभिमानलक्षणं मिथ्याज्ञानं मुक्त्वाऽन्यतः सशरीरत्वं शक्यं कल्पयितुं, नित्यमशरीरत्वकर्मनिमित्तत्वात्"(ब्र.सू.भा.1.1.4)इति शङ्कराचार्य उवाच। "यदा सशरीरतां संकल्पयति, तदा सशरीरो भवति,यदा त्वशरीरतां, तदाऽशरीरतां सत्यसंकल्पत्वात्, संकल्पवैचित्र्याच्च" (ब्र.सू.भा. 4.4.14)इत्यपि विस्पष्टं तदीयं वचनम्। एतादृशां वचनानां 'मरणानन्तरमनुभूयमानं ब्रह्मैव मरणात् प्रागप्यनुभूयते'इत्यर्थकल्पनं वक्रवक्रायां बुद्धावाश्रयणं विना न शक्यते कर्तुम्। अथवाऽत्र 'ब्रह्म द्विविधं मरणपूर्वकालानुभव्यं मरणोत्तरकालानुभव्यं चेति' इति समयः क्रियतां येनाद्वैतिनामुपरि कृता आक्षेपाः संगच्छेरन्!

द्वैत्यन्तःपातित्वमेव वक्तुं शक्यम्। न च त्रिपाद् ब्रह्मवादः प्रकृतत्रैविध्यानुकूलो भवति, त्रयाणामपि ब्रह्मवादानां जीवन्मुक्त्यर्थकबोधविषयत्वेन निर्गुणत्वात्। "बुद्ध्यर्थः पादवत्"(ब्र.सू.3.2.33)इति सूत्रकारश्च बोधार्थमेव पादवत्त्वमाह।

तस्मादप्रमाणमेव प्रकृतब्रह्मत्रैविध्यकल्पनमिति प्रतिभाति।

**उत्तरम्:** तत्त्वमस्यादिवाक्यानां प्रत्यग्ब्रह्मैक्यपरतायास्त्रिविधब्रह्मवादिभिरभ्युपगम्यमानत्वान्न तदन्तःपातित्वं स्वप्नेऽपि वाच्यं, त्रिपाद्वादे प्रकृतत्रिविधवादे च समन्वीयमाने त्रिपादर्वाचीनं सगुणं तत्पराचीनमतीतमिति पञ्चविधत्वमुचितमेव महान्तोऽवगच्छेयुः। शरीरे जीवात्मन्यधिष्ठितानां वागादिकरणानां च सच्चिदानन्दलक्षणनिर्गुणमध्यमब्रह्मानुसंधानं विना न कथंचन विलयो भवितुमर्हति।

तस्मात् सप्रमाणमेवेदं त्रैविध्यकल्पनमिति निश्चयः[1]।

---

1.अत्र पूर्वपक्ष एव बलीयान् न पुनः सिद्धान्तवेषवानुत्तरपक्षः। ब्रह्मणः पञ्चत्वं त्रित्वं वा क्लेशेन साधयितुं यदत्र महान् यत्न आस्थितो ग्रन्थकृता तदपेक्षया शङ्करवाक्यानुसारी परापरब्रह्मविभाग एव सुष्ठुतरं बुद्ध्यारूढो भवति। तथा हि भाष्यवचनम्:- "यत्राविद्याकृतनामरूपादिविशेषप्रतिषेधादस्थूलादिशब्दैर्ब्रह्मोपदिश्यते,तत् परम्। तदेव यत्र नामरूपादिविशेषेण केनचिद् विशिष्टम् उपासनायोपदिश्यते-'मनोमयः प्राणशरीरो भोगरूपः'(छां.3.34.2) इत्यादिशब्दैस्तदपरम्। नन्वेवमद्वितीयश्रुतिरुपरुध्येत;न-अविद्याकृतनामरूपोपाधिकतया परिहृतत्वात्। तस्य चापरब्रह्मोपासनस्य तत्सन्निधौ श्रूयमाणं 'स यदि पितृलोककामो भवति(छां.8.2.1)'इत्यादिजगदैश्वर्यलक्षणं संसारगोचरमेव फलं भवति, अनिवर्तित्वादविद्यायाः। तस्य च देशविशेषावबद्धत्वात् तत्प्राप्त्यर्थं गमनमविरुद्धं सर्वगतत्वेऽपि चात्मन आकाशस्यैव घटादिगमने बुद्ध्याद्युपाधिगमने गमनप्रसिद्धिः (ब्र.सू.भा.4.3.14)" इति।

**५३.प्रश्नः:**"ज्योतिराद्यधिष्ठानं तु तदामननात्" (ब्र.सू.2.4.14) इत्यत्र सूत्रे वागादिकरणानामग्न्यादिदेवताधिष्ठितत्वमवगम्यते।

"करणवच्चेन्न भोगादिभ्यः"(ब्र.सू.2.2.40)इत्यत्र तेषां शारीराधिष्ठितत्वमुच्यते।

एवं वेदान्तन्यायशास्त्रस्याव्यवस्थितत्वात् तदनुसरणे मुमुक्षूणां चित्तव्यामोह एव स्यादिति मन्ये।

**उत्तरम्:** वागादीनां हि करणानां शारीरोपभुज्यमानकर्मफलोपभोगसाधनत्वेनामोक्षाच्छारीरवियुज्यमानत्वेन च शारीराधिष्ठितत्वमवगम्यते।

वचनाद्यानां तु तत्तत्करणवृत्तीनाम् अनुग्राहकाग्न्यादिदेवताऽधिष्ठितत्वमेव भवति। वाग्मित्वादिलक्षणस्य वृत्त्यनुग्रहस्य देवतानितरकर्तव्यत्वात्।

तस्माच्छास्त्रस्याव्यवस्थितत्वव्यामोहं त्यज।

**५४.प्रश्नः:** ब्रह्मणः प्रथमपादो ह्ययं चतुर्दशभुवनवद् ब्रह्माण्डस्वरूपो भवति। एतदन्तर्गता एव सर्वे जीवाः सगुणदेवाश्च भवन्ति। एवमपि जीवानां देवानां च भिन्नलोकावस्थितत्वात् करणवृत्त्यधिष्ठानत्वं देवानाम् उपपन्नम्। यद्यपि सर्वशक्तिमत्त्वाद् देवानां दूरस्थानामपि जीवकर्तृकोपाख्यानवशात् करणवृत्त्यनुग्राहकत्वं भवितुमर्हति। तथाऽपि वृत्त्यधिष्ठानत्वं न कथंचन वाच्यम्।

यद्युच्येतोपासकानुष्ठीयमानदेवतानुसंधानवशाद् वृत्तिदेवतयोः संबन्धाद् देवताया वृत्त्यधिष्ठानत्वोपपत्तिरिति -- नायं सारः। अनुसंधानस्य विच्छेददर्शनात् तत्समयेऽन्याधिष्ठानताया वक्तव्यत्वप्रसंगात्।

तस्मात् करणानां वृत्तीनां च जीव एक एवाधिष्ठानमिति वक्तुं युक्तम्। अन्यथाऽनुपपत्तेः।

**उत्तरम्:** देवानां सर्वशक्तिमत्त्वमभ्युगच्छंस्त्वं जीवदेहान्तर्वर्तित्वं नाव-

गच्छसीति चित्रमेतत्। देवाः खलु ते जीवकरणवृत्त्यनुग्राहका अधिष्ठानत्वेन सर्ववेदान्तप्रसिद्धाः सर्वशक्तियोगात् सर्वेषां देहिनां देहेषु सर्वदा तदनुसंधानानपेक्षमपि वर्तन्त इति प्रसिद्धम्। अणिमाद्यष्टसिद्धिमान् योगी अपि हि लोके बहुशरीराणि समकाले गृहीत्वा बहुदेशेषु विहरन् निग्रहानुग्रहान् करोति। तथा सति सर्वशक्तिमतां देवानां सर्ववृत्त्यधिष्ठानत्वे कः संशयः? नैतेन सगुणदेवा एव करणवृत्त्यनुग्राहका अधिष्ठानानि चेत्यवधारणेन ब्रह्माकारमनोवृत्तेरपि त एवानुग्राहका अधिष्ठानानि चेत्यवगन्तुं शक्यम्। निर्गुणब्रह्मण एव तदुपपत्तेः। तस्मादितरासां करणवृत्तीनां सगुणदेवा अधिष्ठानं, करणानां जीवोऽधिष्ठानमिति पार्थक्यान्नान्यथाऽनुपपत्तिरिति।

**५५.प्रश्नः** ननु लवणेक्षुसुरासर्पिर्दधिक्षीरशुद्धोदकाख्यकाः अष्टदिग्व्याप्ता इति, भूर्भुवः स्वर्ममहोजनस्तपःसत्याख्याः सप्तलोका ऊर्ध्वगता इति; अतलवितलसुतलरसातलतलातलमहातलपातालाख्याः सप्तलोका अधोगता इति प्रसिद्धम्। एतेषां लोकानां समुद्राणां च आवारकाण्डभित्तिश्च कुक्कुटाण्डवद् वर्तते। ईदृशस्य ब्रह्माण्डस्य सृष्टिस्थितिसंहारकर्तारो ब्रह्मविष्णुरुद्राश्चैतदन्तर्गता एव। अस्मात् बहिस्त्वपञ्चीकृतानि पृथिव्यादीनि पञ्चमहाभूतानि क्रमाद् भवितव्यानि।

कथं तर्ह्यण्डभित्तौ विद्यमानायां तानि अपञ्चीकृतपञ्चभूतान्यण्डान्तर्गतान्युपलभ्यन्ते? [इति चेत्]

नायं दोषः। त्वगाच्छादितस्यापि देहस्यान्तस्तैलादीनां रोमद्वारा प्रवेशदर्शनात्। सेतुबन्ध(द्ध?)मपि च तटाकजलं बहिरुपलभ्यते।

यद्वा तेषां सर्वव्यापित्वादण्डोत्पत्तेः प्रागेव तदण्डान्तर्गतत्वोपपत्तिः। एतान्यादायैव ब्रह्मा स्थूलदेहरचनार्थं पञ्चीचकार।

अत्रेदमाशङ्क्यते-किमण्डाधिष्ठानम् अपञ्चीकृता पृथिवी स्यात् - उत

जलम्?आहोस्विदग्न्यादीनि भूतानि। अथवा परं ब्रह्मेति।

कुतः संशयः?पृथिव्या एवाण्डव्यवहितत्वात्; त्रिविक्रमावतारे विष्णु-पादभिन्नाण्डभित्तिद्वारादपां सूतत्वात्;क्रमप्रतिपत्तौ अग्न्यादीनाम् अधिष्ठानत्वौ-चित्यात्, "पादोऽस्य विश्वा भूतानि"( ऋ.सू.10.90.3; वा.सं.31.3)इति श्रुत्या ब्रह्माण्डरूपस्यास्य प्रथमपादस्य ब्रह्मद्वितीयपादाधिष्ठितत्वोपपत्तेश्च।

किं तावत् प्राप्तम्?अपञ्चीकृतानां पञ्चानाम् अप्यण्डातर्गतत्वदर्शनेन बहिरपि तत्कल्पनानावश्यकत्वाद् ब्रह्मद्वितीयपाद एवाण्डाधिष्ठानं भवितव्यमिति स्वबुद्धिनिश्चितमर्थं ब्रुवन् प्राथमिकः कश्चन वादी सोल्लासं प्रत्यवतिष्ठते।

अन्यस्त्वाह-अण्डबहिर्गतानां जीवानां परब्रह्मसमीपे वर्तमानत्वा[१]दण्डा-न्तरागमनानपेक्षमेव तत्संपत्तिर्भवितुमर्हतीति। यथा ब्रह्मलोकं गतानाम् आवृत्तिं विनैव ब्रह्मोपदिष्टवेदान्तश्रवणमनननिदिध्यासनैस्तत्रैव जीवन्मुक्तिद्वारा द्विपरा-र्धावसानसमये ब्रह्मणा सह परब्रह्माख्यकपरमपदप्रवेशो भवति, तथोपपन्नत्वात्। अण्डाद्बहिर्वर्तमानव्याकृतप्रपञ्चमहाभूताधिष्ठानदेवाश्च ब्रह्मविष्णुरुद्रेश्वरसदा-शिवाख्याः पञ्च प्रसिद्धाः सन्ति। तन्मुखेभ्यश्च तत्रत्यजीवानां वेदान्तश्रवणादिकं कर्तुं शक्यम्। अण्डान्तर्गतपञ्चमूर्तीनां कार्यत्वादण्डबहिर्गतपञ्चमूर्तीनां कारणत्वाच्च कार्यमूर्त्यधीनान् जीवानपेक्ष्य कारणमूर्त्यधीनानां जीवानामेवोत्कर्षो भवितुमर्हति। सूतसंहितायां हि कार्यकारणमूर्तिभेदः प्रपञ्चितः।

नन्वण्डाद् बहिरपञ्चीकृतानां पञ्चानां भूतानां केवलं विद्यमानत्वेन यमलोकस्वर्गलोकाद्यभावात् तत्रत्यानाम् असतां जीवानां शिक्षायाः, सतां जीवानां रक्षायाश्च कर्तुमनवकाशाद् वेदान्तश्रवणाद्यनुपपत्तिरिति चेन्नायं दोषः-तत्रत्यानां सर्वेषामपि जीवानां पुण्यात्मत्वोपपत्त्या शिक्षार्हस्य जीवस्यासंभवात्। न च तेषां जीवानां पापोपपत्तिरस्ति। स्थूलदेशप्रवेशाभावेन वर्णाश्रमनिर्बन्धहीनतया विधि-

१. 'वर्णमानत्वा' इति मातृकायाम्।

निषेधाभावात्।

विधिनिषेधयोस्सतोर्हि पुण्यपापे स्याताम्। यथा पशुपक्ष्यादीनां तिरश्चां विधिनिषेधवर्जितत्वेन पुण्यपापसंवन्धो नास्ति,तद्वत्। कथं तर्हि तिरश्चां स्थूलदेह-प्रवेशे सति वर्णाश्रमनिर्वन्धहीनताऽभूदिति चेन्नैष दोषः, शास्त्रजन्यज्ञानानुपपत्त्या परमेश्वरकर्तृकशासनानवकाशात्। तिर्यक्षु हि श्रोत्रादीन्द्रियाणामव्यक्तत्वेनेदं पुण्य-मिदं पापमित्याद्युपदेशो न सहस्रकृत्व उपदेष्टृभिः कृतोऽप्युपयुज्यते। तस्मात् तत्रत्यजीवानाम् अण्डातरागमनानपेक्षं वेदान्तश्रवणादिभिः परब्रह्मसंपत्तिर्भवितु-मर्हतीति।

अन्यश्चाह-बहिर्जीवा एव न सन्तीति। कुतः?अत्रत्यैरेवापञ्चीकृतपञ्च-भूतांशैः सूक्ष्मदेहानाम् उत्पादनयोग्यत्वादचेतनान्यंशिभूतानि पञ्च केवलं वहिः स्युः, अतिकल्पनस्याप्रयोजनत्वात्। यदि तत्र सूक्ष्मदेहवन्तो वा जीवा भवेयुः, तदा तत्रैव स्वप्नवतामिव नानावधाः प्रवृत्तयः स्युः। वर्णाश्रमगुरुशिष्यसुखदुःखज्ञाना-ज्ञानादिसर्वभेदवशात्तदपि किञ्चनाण्डमेव स्यात्। सहस्राण्डानि च पौराणिका आहुः। सा चोक्तिरर्थवत्यास्ताम्[१]। सर्वेषां चाण्डानां स्रष्टृषु ब्रह्मस्वनेकेष्वपि न सृष्टिवैचित्र्यं भवितुमर्हति। "धाता यथापूर्वमकल्पयत्"(तै.आ.10.1.14) इति श्रुत्या पूर्वकालेष्वपि सृष्टिवैचित्र्याभावात्। तस्मादण्डादुपरि जीवावस्थानकल्पन-मयुक्तमिति।

अपरस्त्वाह-अस्मादण्डाद् बहिरंशिभूतानां कल्पनमप्यनुपपन्नमिति। कुतः? स्थूलदेहादीनां प्रकृत्यन्तानामशेषाणामपि हेयांशानामण्डान्तर्गतत्वेन ब्रह्म-द्वितीयपादस्यैव बहिरवस्थानोपपत्तेः। यद्यपि बहिः पञ्चानामंशिनामभावेऽन्तरंशा न भवेयुरित्याशङ्क्य बहिर्भूतानि पूर्वक (?)आह-अन्तर्गतानामेवांशित्वाभ्युपगमात् तत्कल्पनमनावश्यकमिति, प्राथमिकं किञ्चिदनुवर्त इति।

---

१.'त्यासम्' इति मातृकायाम्।

एवं चतुर्षु वादिषु स्वस्वनिश्चितार्थान् ब्रुवत्सु,

प्रतिवादी कश्चनोपतिष्ठन् एवमाह- सर्वेषामपि श्रुतिरेव गरीयःप्रमाणं स्वीकर्तव्यम्। श्रुतिर्हि तैत्तिरीयाख्याऽऽह-"आत्मन आकाशः संभूत आकाशाद् वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी पृथिव्या ओषधयः ओषधीभ्योऽन्नम् अन्नात् पुरुषः" (तैत्तिरीयोपनिषत् 2.11)इति। एवमन्यासु चाष्टोत्तरशतोपनिषद्गतासु सृष्टि-श्रुतिषु सम्यक् पर्यालोच्यमानासु आकाशादिपञ्चमहाभूतसृष्ट्यनन्तरमेव ब्रह्माण्डान्तर्गतस्थूलप्रपञ्चसृष्टिरवगम्यते। अतोऽण्डाद् बहिः पञ्चभूतान्यवश्यं भवितव्यानि।

चतुर्विधभूतग्रामस्य केवलं चतुर्मुखेन सृष्टत्वात् तदुपादानकारणीभूता-पञ्चीभूतपञ्चमहाभूतसृष्टिकर्तृ निर्गुणब्रह्मैव भवितव्यम्। तद्धि सर्वविकारोत्पत्तेः प्रागपि स्वमहिमप्रतिष्ठितं प्रसिद्धम्। न च सूक्ष्मशरीराभिमानिनां जीवानां ब्रह्मणा सृज्यमानत्वं विष्णुना पाल्यमात्वं रुद्रेण संह्रियमाणत्वं वाऽस्ति। तेषां त्रयाणामपि देवानां स्थूलशरीरमात्रसृष्ट्यादिकर्तृत्वप्रसिद्धेः। यदि सूक्ष्मजीवानामपि त एव सृष्ट्यादिकर्तार इति यत्र कुत्राप्युच्येत, ततस्तेषां चाण्डान्तरुत्पत्त्यादिसिद्ध्या बहिरवस्थानकल्पनं वृथा स्यात्। न त्वेवमस्ति। तस्मादण्डबहिःस्थितपञ्चभूतो-पादानकसूक्ष्मदेहवन्तो जीवाः स्थूलदेहप्राप्तिवशात् ज्ञानादिसाधनैश्चतुष्पाद् ब्रह्मस्व-रूपं क्रमेण प्रपद्यन्त इति।

भोः! स्वामिन्! सद्गुरो! किमत्र चतुर्णां वादिनां मतानि ग्राह्याणि? उत प्रतिवादिनो मतं ग्राह्यमिति संशयाकुलस्य मम भवानेव शरणम्।

**उत्तरम्:**अत्रोच्यते । अण्डान्तर्गतस्थूलदेहानां तदुपादानकारणी-भूतान्तर्गतापञ्चीकृतभूतानां चाण्डाधिष्ठितत्वेऽप्यण्डस्याव्यवहितमधिष्ठानं पृथिवी। यतोऽपञ्चीकृते वाह्येऽप्यंशिनप्योऽग्नि(?)वायुरधिष्ठितः। तादृशे वायौ तादृशोऽग्नि-

स्तादृशेऽग्नौ तादृशं जलं तादृशे जले तादृशी पृथिवी। अतस्तेषामाकाशादीनामुत्तरोत्तरव्याप्यत्वेन पूर्वपूर्वव्यापकतया पृथिव्या एवाण्डव्यवहितत्वोपपत्तेः। तानि त्वण्डाद् बहिर्विद्यमानानि पञ्चभूतानि व्याकृतसूक्ष्मप्रपञ्चोपादानकारीणि[1] भूतान्यव्याकृतकारणप्रपञ्चात्मिकायाम् अव्यक्ताख्यकायां मूलप्रकृतावधिष्ठितानि भवन्ति। सैषा मूलप्रकृतिरपि निर्विशेषस्य परब्रह्मणः प्रथमपादेऽधिष्ठिता भवति। एवं सति, तद्द्वितीयपादस्याण्डाव्यवहिताधिष्ठानत्वे का प्रसक्तिः?

त्रिपाच्छ्रुत्युक्तविश्वभूतशब्दस्य ह्यर्थः प्रकृति[2]पर्यन्तोऽवगन्तव्यः। त्रिविक्रमपादभिन्नाण्डभित्तिबिलाज्जलस्रावस्तु पृथिवीद्वारोपपन्नत्वान्न विरुध्यते।

ननु पञ्चीकृतस्थूलप्रपञ्चा अण्डान्तर्गताः, व्याकृतसूक्ष्मप्रपञ्चा अण्डबहिर्गता इत्ययुक्तम्- अण्डान्तर्गतस्थूलदेहेष्वपि सूक्ष्मदेहानां विद्यमानत्वादिति चेन्नैष दोषः। बहिर्गतानामेव सूक्ष्मदेहानां कतिपयानामत्र प्रवेशितत्वात्। तत्रत्यानां ह्यसंख्यानां सूक्ष्मदेहानामामोक्षादविनाशिनाम् अप्यत्रोत्पद्यमानस्थूलदेहप्रवेशैरेव विवेकादिसाधनकलापद्वारा परब्रह्मसंपत्तिः स्यात्। तस्मादण्डबहिर्गतजीवेभ्योऽण्डानन्तर्गता उत्कृष्टा इत्यवगन्तव्यम्।

अण्डबहिर्गतानां जीवानां परब्रह्मसामीप्ये सत्यपि श्रोत्रादीन्द्रियवृत्तिविकासाभावेन श्रवणाद्यनर्हतया न स्थूलदेहप्रवेशं विना परब्रह्मसंपत्तिः कथञ्चिदपि स्यात्। ब्रह्मलोके तु सालोक्यादिसगुणमुक्तिं गतानां स्थूलदेहवत्त्वात् श्रवणाभ्युपपत्तिः।

न चाण्डाद् बहिर्गतानां पञ्चभूतानां ब्रह्मादयः पञ्च देवा अधिष्ठानानि भवन्ति,तेषामप्यण्डान्तर्गतत्वात्। सूतसंहितादिप्रोक्तकार्यकारणमूर्तिभेदश्चाण्डान्त-

---

१. 'कारिणी' इति मातृकायाम्।
२. 'प्रकृती' इति मातृकायाम्।

र्गत एव। बहिः परब्रह्मण एवाद्वितीयस्य पञ्चभूताधिष्ठानत्वात्।

यद्यपि कार्यब्रह्माधीनानपेक्ष्य कारणब्रह्माधीना उत्कृष्टा एव। तथाऽपि मोक्षसाधनानां श्रवणादीनां चित्तशुद्धिहेतुभूतानां वर्णाश्रमाचाराणां चात्रैव संभाव्यमानत्वादेत एव तेभ्य उत्कृष्टा इति निश्चयः।

ननु सूक्ष्मदेहिष्वपि ब्राह्मणादिजातिभेदः पूर्वमवधारितः। सत्यम्, अवधारितः। तत्र विद्यमानानामपि जातीनामाचाराः स्थूलसंयोगादेव हि सिद्ध्यन्तीत्यवादिष्म। पुण्यबाहुल्याभावात्तेषां स्थूलसंयोगो न भवति। यदा त्वण्डान्तर्भूतानां[१] जीवोत्पत्त्यवसरोऽभूत् तदा तेषां पुण्यकालः। तावत्ते सर्वेऽपि महापापिन एव मन्तव्याः। पञ्चभूतसंलग्नानां तेषां सूक्ष्मजीवानां सुषुप्त्युत्क्रान्तिमूर्छास्विव मूढत्वात् तदपेक्षया[२] यमयातनामपि लघ्वीं मन्यामहे।

वर्णाश्रमविधिनिषेधयोः सतोर्हि पुण्यं केवलं वर्धेत, न तु पापम्।

तिरश्चां तु वर्णाश्रमाभावान्नूतनं पुण्यं न गन्धमात्रमप्युत्पद्यते। पूर्वपापानां केवलमुपभोगेन प्रक्षीयमाणत्वात्। यदि वर्णाश्रमबन्धं विना स्वेच्छं विहरेयुस्तदा तिर्यक्तुल्या [ए]व मनुष्याः शिष्टैर्बहिष्कार्या भवेयुः। न हि तादृशबन्धरहितः कश्चिदपि मोक्षीयमामुष्मिकमैहिकं वा सुखं किञ्चिदश्नुवीत। तादृशबन्धवान् पुरुषोत्तमो लोके तावत् त्रिविधसुखमश्नन् दृश्यते। न च तद्बन्धरहितानां सहस्रकृत्वस्तत्त्व उपदिष्टेऽपि तत्त्वज्ञानमुत्पद्येत, नाप्यण्डबहिर्गतानां जीवानां मूकाण्डबधिरपङ्ग्वादीनामिव निर्व्यापारत्वात्। स्थूलदेहलाभं विना तत्सुखत्रयं भवितुमर्हति।

न च स्वप्नवतामिव तत्रत्यसूक्ष्मदेहवतां जीवानां नानाविधप्रवृत्तयो भवितुमर्हन्ति। अत्र स्वप्नवतामपि स्थूलदेहसंबन्धात्। स्थूलदेहसंबन्धं विना लोकान्तरं

---

१. 'भूतन' इति मातृकायाम्।
२. 'तदपेक्ष्यया' इति मातृकायाम्।

जिगमिषवो[१] ह्यातिवातिकैर्नीयन्त इत्युक्तम्।

यद्यप्यत्रत्यानां पञ्चभूतांशानामपञ्चीकृतत्वात् सूक्ष्मदेहोपादानता स्यात्। तथाऽपि तत्सृष्टिकर्तुरत्राभावाद् बहिष्ठस्य स्रष्टुः परब्रह्मणोऽत्रागमनौचित्याच्च बहिष्ठान्येव पञ्चभूतानि बहिष्ठसूक्ष्मदेहोपादानानि स्युः।

एवमण्डसहस्रेषूक्तेष्वपि तेषामपि बहिस्तानि महाभूतानि; तँल्लग्नाः सूक्ष्मजीवास्तदधिष्ठानभूता मूलप्रकृतिस्तदधिष्ठानं परं ब्रह्म च वर्तन्त इत्यतो-ऽण्डादुपरि जीवावस्थानकल्पनं युक्ततरमित्यवगन्तव्यम्।

न हि प्रकृत्यन्ता हेयांशा अण्डान्तर्गता इति किञ्चन प्रमाणमस्ति,ब्रह्म-प्रथमपादान्तर्गतत्वप्रसिद्धेः। अण्डान्तर्गतो हि स्थूलप्रपञ्चः। तद्बहिः सूक्ष्मप्रपञ्चो विकृतिसंज्ञकः। तद्बहिर्ब्रह्मणः प्रथमः पादः। तद्बहिर्द्वितीयादिपादा इत्येवं श्रुति-युक्त्यनुभूतिभ्योऽवगम्यमानत्वादण्डार्गतान्येवांशीनि पञ्चभूतानीत्ययुक्तमिति चत्वारो वादिपक्षा निराकृताः।

ननु पञ्चीकृतभूतविकाराः स्थूलप्रपञ्चा व्याकृतभूतविकाराः सूक्ष्मप्रपञ्चा इत्युक्तम्। कथं पञ्चीकरणम्? कथं वा व्याकरणमित्याशङ्कायामुच्यते-पञ्चभूतानां स्वस्वार्धांशैरितराष्टमांशसंयोगे विधात्रा कृते सति स्थूलदेहोपादानानाम् अस्थि-मांसरक्तमज्ञानाडीत्वगादीनां द्रव्याणामुत्पाद्यमानत्वात्। अथ तैर्द्रव्यैर्यथायोग्यं शरीराणां ब्रह्मणा निर्मितत्वाच्च। कथं तर्हि जलूकायामस्थि नास्ति, भ्रमरे रक्तमांसादि, मशकमत्कुणादिषु चास्थिनाड्यादीति चेन्नैष दोषः, इतराष्टमांश-न्यूनतावशात्तथोपपन्नत्वात्। स्रष्टुर्हि सर्वशक्तिमतस्तादृशसंकल्पविशेषमहिम्ना विचित्रतरा एते प्राणिनस्तत्तत्पूर्वपापफलसिद्ध्यर्थमेवं सृष्टाः।

व्याकरणं त्विह संग्रहेणोच्यते-गुणत्रयसाम्यावस्थात्मिकायाः प्रकृतेः सकाशात् पञ्चभूतसत्त्वगुणसमष्टावन्तःकरणं तद्व्यष्टौ ज्ञानेन्द्रियाणि पञ्च। पञ्च-

१. 'जिगिमिषवो' इति मातृकायाम्।

भूतरजोगुणसमष्टौ प्राणास्तद्व्यष्टौ कर्मेन्द्रियाणि पञ्च। तमोगुणव्यष्टिसमष्ट्यो-स्तु पञ्चीकृतस्थूलप्रपञ्चः। एवं सति, पञ्चभूतव्याकरणोत्पन्नानामेकोनविंशति-तत्त्वानां समुदाय एव सूक्ष्मप्रपञ्च इति मन्तव्यम्।

तर्ह्येवमण्डाद् बहिरुत्पन्नान् सूक्ष्मदेहवतो जीवान् किमण्डान्तर्ब्रह्मा निश्चकर्ष? उत तत्सृष्टिकर्ता प्रकृत्यवच्छिन्नः परमपुरुषस्तत्याजेति चेत्

लोके ह्यचेतनं धनादिकं गृहाद् गृहान्तरं[१] गन्तुं दातारं प्रतिग्रहीतारं च सममेवापेक्षते। तद्वत्[२] स्रष्टृद्वयसापेक्षमिह स्थूलदेहप्राप्तिवशाद् ज्ञानादि-साधनैश्चतुष्पाद् ब्रह्मस्वरूपं क्रमेण प्रपद्यन्त इति प्रतिवादिपक्षः स्थिरीकृतः।

५६.प्रश्नः ननूक्तपूर्वेषु भूरादिषु उपरितनेषु सप्तसु लोकेष्वेव विद्यमाना-वन्तरभेदः श्रुत्यादिष्ववगम्यते। छान्दोग्ये[1]" स एतं देवयानं पन्थानमासाद्याग्नि-लोकमागच्छति (कौ.1.3. )"इत्यादिवचनैः, "अर्चिरादिना तत्प्रथितेः"(ब्र.सू.4.3.1) इत्यादिना ब्रह्मसूत्रैश्चाग्निलोकः, संवत्सरः, देवलोको, वायुलोक, आदित्यलोक-श्चन्द्रलोको विद्युल्लोको, वरुणलोक इन्द्रलोकः प्रजापतिलोको ब्रह्मलोक इत्येतेषाम् एकादशलोकानाम् उत्तरोत्तरमुपरि मुमुक्षुभिर्गन्तव्यताऽभिधीयते।

अस्मिन्नर्थे हि पर्यालोच्यमाने सुतराम् असंगतत्वं भवति। कुतः ? अग्निवाय्वादयो ह्यष्टदिक्पालकाः कथं तेषां लोका उपर्यधोऽवस्थिता भवितुमर्हन्ति? समानास्वेवाष्टदिक्षु भवितव्यत्वात्। न चाष्टौ लोकाः क्रमेणाभिहिताः। अग्निलोक-गमनानन्तरं यमलोकनिऋतिलोकादिगमनानुक्तेः। नच चत्वारो दिक्पाला एवाभिहिता न तुविदिक्पाला इति वक्तुं शक्यं, द्वयोर्दिक्पालयोर्द्वयोर्विदिक्पालयोश्चा-

1.अत्रोद्धृतं वाक्यं कौषीतक्युपनिषदि वर्तते, न तु छान्दोग्ये।

१.'ग्रहाद् ग्रहान्तरं' इति मातृकायाम्।
२.'तद्व' इति मातृकायाम्।

भिहितत्वात्। न चातिवाहिक उल्लासेन परितो विद्यमानलोकदिदृक्षुर्भवितुमर्हति, मुमुक्षुभारवाहिक्त्वेन ब्रह्मलोकगमनत्वरोपेतत्वात्। किञ्चादित्यलोकादुपरि चन्द्र-लोक उच्यते।

इदं सूर्यसिद्धान्तादिसर्वशास्त्रविरुद्धम्।

सूर्यमण्डलो हि मुमुक्षूणामनावृत्तिहेतुभूतः प्रसिद्धो मार्ग उपरि भवितव्यः। चन्द्रमण्डलस्तु बुभुक्षूणां[१] पुनरावृत्तिहेतुभूतः प्रसिद्धो मार्गोऽधो भवितव्यः।

भोगस्थानस्येन्द्रलोकस्य ततोऽप्युपर्यभिधानमसमञ्जसम्।

तस्माच्छ्रुत्युक्तानामपि क्रममुक्तिमार्गाणामेवं विरुद्धत्वात् तादृशीः सर्वाश्च श्रुतीरर्थवादबुद्ध्योपेक्ष्यान्यश्रुत्युक्तां सद्योमुक्तिमेव पारमार्थिकीं[२] मन्य इति कश्चिदाचष्टे।

अन्यस्त्वाह-तैत्तिरीयोपनिषदि"मनुष्यलोको मनुष्यगन्धर्वलोको देवगन्धर्व-लोकः पितृलोक आजानजलोकः कर्मदेवलोको देवलोक इन्द्रलोको बृहस्पतिलोकः प्रजापतिलोको ब्रह्मलोक"(तै.उ.2.8.1) इति एकादशलोका उपर्युपर्युच्यन्ते। न तत्र सूर्यचन्द्रयो-र्लोकावुच्येते। एवमुपनिषदामनिश्चितार्थवादित्वात् ता उपेक्ष्य सूर्यसिद्धान्तानुरोधेन ध्रुवचक्रस्याधोभागे चन्द्रलोकस्तदुपरिभागे सूर्यलोकश्चावधारयितव्यौ। अन्यथा प्रमाणान्तरादर्शनादिति।

इतरस्त्वाह- सूर्यसिद्धान्तेऽपि न कियानंश उपपद्यते। कुतः? सूर्यचन्द्रयो-रुदयास्तमयौ भवत इति। अचञ्चलावेव हि सूर्याचन्द्रमसौ दिवि वर्तेते। भूमे-र्भ्रमणैस्तयोर्भ्रमणस्या[३]रोप्यमाणात्वात्। यथा हि नौकामूढेन तीरस्था वृक्षादयः पलायमाना अवलोक्यन्ते तद्वत्। तथाऽपि चन्द्रलोकोऽधो वर्तते सूर्यलोक उपरीत्यर्थो-

१.'भुभुक्षूणां' इति मातृकायाम्।
२.'पारमार्थिकां' इति मातृकायाम्।
३.'मरणस्या' इति मातृकायाम्।

ऽसमीचीन एवेति।

अत्रैवं त्रयाणां वादिनां पक्षाः साधवोऽसाधवो वा न जाने भवतैव निश्चितार्थेनाहमनुग्राह्यः। मया हि "तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया। उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः"(भ.गी.4.34.)इति स्मृतिमनुसृत्य सद्गुरुनिकटे तूष्णीमवस्थानमनुपपन्नमिति मत्वा मनसि जायमानान् संशयान् निवर्तयितुं स्वयमेवासकृत् पृच्छ्यते। अतो न मामपराधिनं विजानीहि।

**उत्तरम्:** अत्रोच्यते- न ह्युपनिषदुक्तक्रमान्यथाकरणे कोऽपि शक्नुयात्। न चोपनिषदा कयाचिदप्यपारमार्थिकासंगतार्थ उच्येत। छान्दोग्यवाजसनेयकादिसर्वश्रुतिसमन्वितश्चार्थः सूत्रकारेण भगवता वेदव्यासेन स्फुटमभिहितोऽस्ति। न तद्विरोधेन किञ्चन शास्त्रं भवितुमर्हति।

ब्रह्मलोकजिगमिषूणामवश्यगन्तव्या अग्न्यादिलोका अन्तरालवर्तिनः श्रुतिसूत्रप्रसिद्धा न सन्तीति न केनचिदपि वाच्यम्। न चाष्टदिक्पाललोकाः समानास्वेव दिक्षु भवितव्या इति नियमोऽस्ति। तत्तद्दिङ्मात्राणां लोपं विनोपर्यधोऽवस्थितत्वोपपत्तेः। न चाग्निलोकगमनानन्तरं यमलोकादिगमनं नियम्यते। अगन्तव्यलोकमनोयुक्त्यनुपयोगात्। तस्माच्छ्रुतिसूत्रोक्तक्रमेणोपर्यधोऽवस्थित्या एवाग्न्यादिलोका मन्तव्याः।

आदित्यलोकादुपर्येव च चन्द्रमसो लोकोऽवधार्यते। नैतेन सूर्यसिद्धान्तशास्त्रस्य च विरोधः स्यात्। मोक्षद्वारत्वेन सूर्यस्योत्कर्षात्, भोगद्वारत्वेन चन्द्रस्योत्कर्षाच्च। उत्कर्षापकर्षाभिप्रायेण सूर्यस्योर्ध्वावस्थाने चन्द्रस्याधोवस्थाने च बहुशोऽभिहितेऽपि श्रुतिसूत्रोक्तप्रकारक [ए]वोच्चनीचस्थानभेदः स्यात्।

भोगमोक्षद्वारयोरेवं स्थितयोरपि भोगमोक्षस्थानयोरिन्द्रलोकब्रह्मलोकयोः पुनरावृत्तियोग्यत्वेन तदयोग्यत्वेन चोपर्यधोऽवस्थितत्वान्न किञ्चिदप्यसामञ्जस्य-

मस्ति। तस्मादेवमविरोधात् क्रममुक्तिश्रुतीनामर्थवादत्वं न स्वप्नेऽपि शङ्क्यम्। सद्यो-मुक्त्यधिकारासंभवात् क्रममुक्तिश्रुत्यर्थविवरणमेव बहूपकारकं मन्तव्यम्।

तैत्तिरीयोपनिषदुक्तानां मनुष्यादिलोकानां चाविरोधेन तत्र तत्राव-स्थानाविरोधादुपसंहारोपपत्तिः। तेषां च मनुष्यादिलोकानामुत्तरोत्तरं शतगुणाधिका-नन्दवत्त्वकथनादग्न्यादिलोकानामिव क्रमेणोपर्यावस्थानमेव मन्तव्यम्। मनुष्यादि-लोकोक्तिषु सूर्यचन्द्रयोर्लोकानुक्त्या कथं तयोर्लोकौ न स्त इत्याशङ्कितुं युक्तम्। अन्यत्र हि बहुशस्तौ प्रोच्येते। तस्मान्निश्चितार्थवादिन्य एवोपनिषदः। अत्रोक्तार्थविपर्ययेण चन्द्रसूर्यावस्थानवादित्वं न सूर्यसिद्धान्तशास्त्रस्य मन्तव्यम्। उपनिषदर्थाविरोधेनैव तस्य शास्त्रस्य प्रवृत्तत्वात्। सावित्र्युपनिषदि चाग्न्यादित्य-चन्द्रमसामुत्तरोत्तरमुपरिष्ठत्वमवगम्यते। ऐतरेयोपनिषदि च चक्षुष आदित्यः, मनसश्चन्द्र इत्युक्तम्। चक्षुषो व्यष्टित्वादिन्द्रियत्वाच्चादित्यस्याधोऽवस्थानं मनसः समष्टित्वादिन्द्रियाधिपतित्वाच्च चन्द्रमस उपर्यवस्थानं च न्याय्यमवगन्तव्यम्।

सूर्यचन्द्रमसयोरुदयास्तमयौ च सर्वश्रुतिप्रसिद्धौ स्तः[१]।

सूर्यस्य हि सप्ताश्वत्वारुणसारथित्वादिकं न कोऽप्यपलापयितुं शक्नुयात्। यदि भूमेर्भ्रमणमुच्यते, तदा भूम्यधोभागस्योपर्यागमनकालीनायां रात्रौ भूमिष्ठानां जनानामतलवासिभिः संभाषणादिकं संभवितुमर्हति। न तु संभवति। न च कियानपि तत्रत्योदन्तो विज्ञायते। तस्मात् त्रयाणामपि वादिनां पक्षा असाधवो मन्तव्याः।

तमर्थमुपरिष्टाद् विस्तारयिष्यामः[1]।

1. 'उपरिष्टाद् विवरिष्याम' इति तूक्तम्। परन्तु तादृश 'उपरिष्टाद् -भागः' कुत्रापि न गोचरः। केनापि कारणेन वाक्यमिदं विस्मृतं वाऽथवा अस्माभिरुपलब्धो ग्रन्थोऽपरिपूर्णो वा? अपरिपूर्णतासूचकं किमपि नास्ति ग्रन्थातिमभागस्थायां पुष्पिकायम्। प्रायशः प्रथम एव पक्षोऽत्र ग्राह्य

१. 'स्तौ' इति मातृकायाम्।

6

५७.प्रश्नः: ननु, अष्टदिक्पालेष्वग्निवरुणवायूनां त्रयाणां पञ्चभूतान्तर्गतत्वमवगम्यते। लोकाश्चावसस्थानभूता निर्दिष्टाः। तस्य तु निर्देशस्य व्यभिचारो भवति। कुतः? भूमावप्यस्याग्निजलवायूनां परिदृश्यमानत्वात्। यद्युच्येत-शरीरशरीरिणोर्भेदादग्निशरीरस्यात्रावस्थानेऽपि तच्छरीरिणो देवस्य निर्दिष्टायां दिशि केवलमवस्थानं स्यादिति; तदा शरीरशरीरिणोरवश्यभवितव्यस्य संबन्धस्याभाव एव [१]को दोषः? देवताऽननुविद्धेऽग्नौ श्रौतैः स्मार्तैश्च क्रियमाणानां होमानाम् वैयर्थ्यापत्ति[२]रन्यो दोषः। चेतनदेवासंवन्धत्वेनाचेतनतया दग्धृत्वानुपपत्तिरपरो दोषः।

एवंविधानां दोषाणां प्रसज्यमानत्वात् तदप्रसंगायाग्नेर्देवस्य सर्वव्यापकत्वं वक्तव्यम्।

“अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव”(कठ.उ.2.2.9)इति श्रुतिश्च अग्नेः सर्वव्याप्तात्वं दर्शयति। अत्रैवं सति कथमग्नेर्वरुणवाय्वोर्वा स्थाननिर्देशवचनं समीचीनं स्यात्?तस्मादग्न्यादीनां दिग्देशकल्पनमयुक्तमिति।

अपरस्त्वाह-अग्नेश्च देवस्य हि मनुष्यदेहस्येवैकोनविंशतितत्त्ववानेव सूक्ष्मदेहः स्यात्। तस्यैकस्मिन् स्वीये स्थूलदेहेऽनुप्रवेशे सत्यन्येषामग्निहोत्रादिप्रतीकानामनेकाग्निमण्डलानामसूक्ष्मदेहवत्त्वं प्रसज्यते। एकस्य समकाले बहुप्रवेशासंभवात्। न चाग्नीनां बहुरूपाणाम् अप्येकदेवतायतनत्वात् तारतम्यं भवितु-

---

इतीव। नासीद् ग्रन्थं कर्तुर्धन्यजन्मनोऽस्य भूमिभ्रमणे श्रद्धा। अस्तु नाम। प्रायशस्तस्य समये भूमेः स्थिरत्वभ्रमणयोर्विषये वादा विवादाश्च भूयांस उत्पन्ना इत्यभ्यूह्यते। तत्र सांप्रदायिकं पक्षं बलवत् समर्थयितुमेष पौराणिकीः कल्पना आश्रयते।

---

१.‘व’ इति मातृकायाम्।

२.‘अवैयर्थ्यापत्ति’ इति मातृकायाम्।

मर्हति। लोके तु कञ्चिदग्निं चण्डालवाटिकागतमशुद्धं कञ्चिद् ब्राह्मणगृहस्थं शुद्धं चाहुः। यदि देवतानुप्रवेशः सर्वेषामप्यग्निप्रतीकानामविशेषेण स्यात्, तदा सर्वेऽपि शुद्धा इति सर्वैरपि ग्राह्या एव स्युः। यदि चानुप्रवेशो न स्यात् तदा सर्वेऽप्यशुद्धा इत्यग्राह्याः स्युः।

यद्वाऽनुप्रवेशाभावे जडत्वाच्छिलादीनामिवाग्नीनां सर्वैः स्पृश्यत्वं भवितुमर्हति; नैवं दृश्यति। जलवाय्वोश्च शुद्धाशुद्धत्वमाहुः। तस्मादग्न्यादिविषयकोऽयं लौकिकाचारः सुतरामयौक्तिक इति बुद्धिमद्भिरुपेक्षणीय इति।

अन्यस्त्वाह- लोकप्रसिद्धौ जलाग्नी न पारमार्थिकौ स्यातामिति। कुतः- श्रुत्युक्तलक्षणादर्शनात्। तथा हि"अग्नेरापः"(ना.उ.1.15. तै.उ.2.11. सुबा.उ. 1.1. पैङ्ग.उ.1.3. यो.चू.उ.72) इति श्रुत्या जलस्याग्निप्रभवत्वम् अवगम्यते। यद्यग्नेः कारणत्वमपाकार्यत्वं च स्यात्, तदा न कथञ्चन कार्येण कारणस्याभिभवः स्यात्। लोके त्वद्भिरग्नेरभिभवो दृश्यते। न च श्रुतिविरुद्धानुभवः शिष्टैरूरीक्रियेत। तस्मादाभ्यामन्यावण्डाद् बहिरवस्थितावेव जलाग्नी स्यातामिति।

इतरस्त्वाह-नायमग्निर्वास्तवो भवितुमर्हति। कुतः? अग्नेः सर्वदग्धृत्वस्य स्वधर्मत्वात्। अग्निबन्धकेन हि केनचिद् बध्यमानस्याग्नेर्दग्धृत्वं न भवति। न हि वास्तवो धर्मो मन्त्रेणान्येन वा कथञ्चन बध्येत। न चाधिकारिकत्वेन सम्यग्दर्शनवत्त्वादग्नेर्बन्धवार्तोपपद्यते। न चाग्निदेवस्याप्रत्यक्षत्वात् "अग्ने नय सुपथा राये"(ईश.18) इत्यादिमन्त्रोक्तसंबोधनं युक्तम्। "अग्निर्वाग् भूत्वा मुखं प्राविशत्" (ऐ.उ.1.2.4) इति श्रुत्या वाचोऽप्यग्निरूपत्वेनाग्निनाऽग्नेः संबोध्यमानत्वासंभवात्। तस्मादग्निविषयिण्यः श्रुतयश्चासंगता इति।

**उत्तरम्:**अत्रोच्यते। न ह्यग्निदेवस्य दिग्देशनिर्देशेऽपि सर्वाग्निव्याप्त्यभावोऽस्ति। [ए]कस्यापि शरीरिण आधिकारिकत्वमहिमोत्पन्नसर्वशक्तियोगात्

सर्वत्रावस्थानयोग्यत्वोपपत्तेः। अणिमाद्यैश्वर्यवान् योग्यपि हि लोके योगशक्त्या नानादेशेषु समकालं नानाशरीराणि गृहीत्वा विचित्रतराः क्रियाः कुर्वन् विजायते। एवं सति महाभागस्याग्नेर्देवस्य विविधशरीरग्रहणादिषु को नु विरोधः स्यात्? “प्रदीपवदावेशस्तथा हि दर्शयति” (ब्र.सू.4.4.15)इति सूत्रकारश्चाविरोधमाह। तस्मादग्निहोत्रौपासनादिभेदेन भिन्नस्थानेषु बहुष्वप्यग्निप्रतीकेष्वेकस्यापि देवस्यानुप्रवेशवशाच्छरीरशरीरिसंबन्धसिद्ध्या नोक्तदोषाः शक्यशङ्काः। “अग्निर्यथैको भुवनं प्रविष्ट” (कठ.2.2.9)इत्याद्यया श्रुत्या चाविरोधोऽवगम्यते। यथा सर्वदेशाधिपतेरप्ययोध्यापतित्वं पृथगुच्यते, तथा सर्वव्यापकस्याग्नेर्दिग्देशकालकल्पनं न विरुध्यते। एवमेव वरुणवाय्वोरप्यवगन्तव्यम्।

आग्नेयसूक्ष्मदेहस्यैकत्वेऽपि शक्तिविशेषयोगादनेकस्थूलदेहप्रवेशोपपत्त्या विचित्रशक्तिमत्सु तेषु देवेषु बहुप्रवेशासंभववचनमयुक्तम्। न च लोकप्रसिद्धः शुद्धाशुद्धव्यवहारोऽनुपपन्नः।

मन्त्रपूतस्याग्नेरग्निहोत्राद्यायतनत्वेन परिशुद्धत्वाच्चण्डालादिस्पृष्टस्यामन्त्रपूतत्वेनापरिशुद्धत्वाच्चाद्यस्योपादेयताऽन्यस्य च हेयता युज्यते। तर्हि चण्डालस्पृष्टादग्निमण्डलान्निष्क्रान्त एवाग्निदेवः स्यादिति चेन्न, तादृशामग्नीनाम् अमन्त्रपूतत्वेन अपरिशुद्धतया तान् स्वकर्मसूपयुञ्जतां ब्राह्मणादीनामग्निदेवस्तत्रैव स्थित्वा पापानि प्रवर्धयेत्। पद्मपत्राम्भ इवावस्थितस्य तस्य लोपाभावान्न बहिर्निष्क्रमणनियमोऽस्ति। शुद्धाशुद्धानां सर्वेषामप्यग्नीनां सर्वदा देवतानुप्रवेशसद्भावान्न जाड्यं शक्यम्। तर्हि चण्डालाग्निना ब्राह्मणस्य पापेऽपि ब्राह्मणाग्निना चण्डालस्य पुण्यं स्यादिति चेन्न, द्वयोरपि पापसंभवात्। तस्माद् वैदिकानुसार्ययं लौकिकाचारो न कदाऽप्युपेक्षणीयः।

यस्तु लोकेऽद्भिरग्नेरभिभवो दृश्यते-नायं दोषः। न्यूनाधिकतावशादुप-

पन्नत्वात्। कार्यस्याधिक्येन हि कारणमभिभूयते। श्रुत्यविरुद्धानुभवस्त्वण्डाद् बहिष्ठाबग्न्योः स्यात्। नैतेनात्रत्यौ जलाग्नी न पारमार्थिकाविति वक्तुं शक्यम्।

न चाग्निबन्धकेनाग्नेः स्वधर्मलोपो दोषाय स्यात्। सत्याभिसंबन्धिन्यो हि सर्वाश्च देवताः। स्वानुगृहीतपूर्वैर्मन्त्रैः क्रियमाणस्य दग्धृत्वशक्तिभङ्गात्मकबन्धस्य स्वीकर्तव्यत्वात्। वास्तवोऽपि ह्यपां धर्मः शैत्यम् अग्नितापेन लुप्यते; न च लोपश्चिरकालीनस्तद्वदवगन्तव्यम्।

यस्त्वग्निं सर्पादीन् वा मन्त्रैर्बध्नाति स महापापीयान् न कदाऽपि संसारबन्धेभ्यो विमुच्येत। परबाधानिवृत्तिरूपं सुकृतं तु स्वल्पतरं नोर्जितं स्यात्।

न चाग्नेः संबोध्यमानस्याप्रत्यक्षत्वमस्ति, प्रतीकेऽभिध्यातत्वेन मानसप्रत्यक्षत्वात्। वाग्वृत्तिभूतस्याग्नेः कार्यत्वेन वाग्वृत्त्यनुग्राहकस्य कारणाग्नेः संबोध्यमानत्वाविरोधात्। पुत्रेण हि पिता संबोध्यते।

तस्मादनवद्यम्।

५८.प्रश्नः: ननु,अग्न्यादयो देवा उपासकैर्हृदये नोपासितव्या इति सर्वेषु शास्त्रेष्वभिधीयते। कथमिदमुपपद्यते? कारणाधिष्ठानयोरभेदेन ध्यानक्रियासंभवात्। ननु-"ध्यायेन्निरन्तरं धीमानात्मनाऽऽत्मानमात्मनि"(? )इत्येवं बहुश उपलभ्यत इति चेन्नैष सारः। तृतीययाऽन्तःकरणस्य द्वितीयया परमात्मनः सप्तम्या हृदयकमलस्य च व्याख्याततत्वेन भेदसिद्धेः। हृदयचित्तशब्दयोस्तु[१] नैव भेदोऽस्ति,करणमात्रार्थकत्वदर्शनात्। तथा हि कोशे" चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः"(नामलिङ्गानुशासने) इति चित्तपर्यायो मानसशब्दो दृश्यते। यदि हृदयं ध्येयाधिष्ठानमभ्युपगम्येत, तदा कारणसिद्ध्या ध्यानक्रिया न सिद्ध्यति। भिन्नयोस्तु कारणाधिष्ठानयोः सतोः क्रियोपलभ्यते। तक्ष्णा हि दारुमयविग्रहादिचिकीर्षुणा

१.'हृदयशब्दयोस्तु' इति मातृकायाम्।

वास्यादिकरणजातं दार्वधिष्ठानं चापेक्ष्येते। अन्यथैकस्य लोपे क्रिया न संभवति।

यद्युच्येत--ध्येयस्य परिच्छिन्नप्रत्यगात्मत्वे ह्यधिष्ठानं करणं चापेक्ष्येते; तदन्यापरिच्छिन्नपरमात्मत्वे द्वयोरेकस्याधिष्ठानलोपेऽपि क्रियोपपद्यत इति, तथापि हृदयाधिष्ठितस्यैव ध्यानकर्तृत्वाद् हृदयस्य नाधिष्ठानत्वलोपोऽस्ति।

ननु जाग्रदवस्थायामेव ध्यानस्य क्रियमाणत्वात् "नेत्रस्थं जागरितं विद्यात्" ( ब्र.उ.21ब्र.उ.उपसंहारपद्यतः प्राक् द्वितीयं पद्यम्; ना.पं.उ.5.13 'तत्तद्वृत्ति-व्यापारभेदेन पृथगाचारभेदः 'इति गद्यानन्तरम्। निर्णयसागरप्रकटित 'ईशाद्यष्टोत्तरशतोपनिषद' इति संग्रहे पृष्ठम्-273 पङ्क्तिसंख्या 5) इति श्रुत्या नेत्रस्यैव ध्यात्रधिष्ठानत्वावगमाद् ध्यातुर्हृदयाधिष्ठितत्वानुपपत्तिरिति चेत्,

यद्यपि सुषुप्त एवात्मा हृदयेऽवतिष्ठते। न तस्य तमोऽभिभूतत्वेन निर्वृत्ति-कतया ध्यातृत्वमस्ति। तथाऽपि चित्तापरपर्यायत्वेन हृदयस्य त्रिष्वपि नेत्रकण्ठ-हृदयाख्येषु स्थानेषु गमनसंभवाद् ध्यातुर्हृदयाधिष्ठितत्वोपपपत्तिः।

अत्रैवं सति हृदयस्याधिष्ठानत्वयोरुभयोरपि वक्तव्यत्वापत्त्या पूर्वोक्त-प्रकारेणैकलोपवशात् क्रियानुपपत्तिरिति।

**उत्तरम्:** अत्रोच्यते--न हि हृदयशब्दश्चित्तापरपर्यायः स्यात्,चित्तस्य ध्यानवृत्तिमत्त्वेन करणत्वात्, हृदयस्य मांसपिण्डात्मकत्वेनाधिष्ठानत्वाच्च। कोशोक्ता-भेदस्त्वौपचारिकश्चित्तस्य मांसपिण्डसंलग्नत्वात्। न च ध्येयः प्रत्यगात्मा तत्र पिण्डे तदभेदेन गुडपिष्टयोरिव संलग्नोऽस्ति, घटाकाशस्येव निर्लेपतयाऽधिष्ठितत्वात्। करणं बुद्धिः कर्ता जीवः उभावपि तु पिण्डतादात्म्यं प्राप्य मुमूर्षावस्थायां मुमुक्षाव-स्थायां च तद्वियोगदुःखं प्रबलमनुभवतः। तत्पिण्डाश्रिता नाड्यो[१] ह्यापाद-मस्तकं व्याप्ता उत्क्रान्तिसमये शिथिलीभवन्ति। स पिण्ड एव निदिध्यासनेना-

---

१. 'नाडयो' इति मातृकायाम्।

खण्डाकारो भूत्वा सच्चिदानन्दरसो भवति। हृदयपिण्डाधिष्ठितस्य परिच्छिन्नस्य प्रत्यगात्मनः पूर्वं ध्येयत्वेऽपि पश्चान्निदिध्यासनकाले ध्यातृकरणानन्यत्वसिद्ध्या मननारूढत्वसंभवात्।

एवमपि करणाधिंष्ठानयोर्भेदः सिद्ध्यति।

यद्यपि हृदयपिण्डसंलग्नस्यापि चित्तस्य ध्यातुर्वा नेत्रकण्ठहृदयेषु जाग्रत्स्वप्नसुषुप्तिास्थानेषु वृत्तिविशेषैर्गमनमवकल्पेत, तथापि न मांसपिण्डस्य कण्ठनेत्रयोर्गमनं भवितुमर्हति। अविवेकदशायां जागरितस्य नेत्रस्थानत्वेऽपि विवेकदशायां हृदयस्थानत्वमेवावगन्तव्यम्। जाग्रन् हि ध्याता हृदयाधिष्ठितो भवति।

इदं त्विह निरूपणमपूर्वमिव मन्ये-यद् हृदयमांसपिण्ड एव ब्रह्माकारेण परिणमते मोक्षावस्थायामिति। पूर्वनिरूपणं तु ब्रह्माकारमनोवृत्तिप्रवाहैर्जीवो ब्रह्मीभवतीति। यतो हृदयचित्तयोर्गुडपिष्ट्योरिवाभेदोऽभूत्। ततश्चित्तस्य ब्रह्मणि विलये सति हृदयस्यापि तत्र तदैव विलयो भवेदिति मन्तव्यम्।

एतेन मांसपिण्डात्मकस्य हृदयस्य ब्रह्मणि विलयाभ्युदयाभ्युपगमेनापादमस्तकं कृत्स्नदेहस्य च तत्र विलयो भवेदित्ययं योगशिखोपनिषद्राद्धान्तश्च साधुतमः। पञ्चीकृतस्थूलदेहस्यापञ्चीकृतचित्तसंयोगवशात् समकालविलयोपपत्तिः। लोके ह्यसन्नपि सत्संयोगेनापि सद्गतिमाप्नोति।

५९.प्रश्नः:ननु गुड[१]पिष्ट्योरिव चित्तपिण्डयोः संयोगोऽभिहितः। तादृशसंयोगवत्त्वात् समाधिना चित्तस्य ब्रह्माकारत्वसिद्धौ पिण्डस्यापि तत्सिद्धिरिति चाभिहितम्। एवं सति मुमुक्षोरिव मुमूर्षोरपि[२] पिण्डविलयोऽभ्युपगन्तव्यो भवति। न च यमलोकं स्वर्गलोकं ब्रह्मलोकं वा जिगमिषो[३]र्मुमुक्षोर्मांसपिण्डगमनं दृश्यते,

१.'गुळपिष्ट्योरिव' इति मातृकायाम्।

२.'मुमुक्षोरपि' इति मातृकायाम्।

३.'जिगिमिषो' इति मातृकायाम्।

स्थूलत्वेन पिण्डस्य चर्मचक्षुषाऽपि दर्शनयोग्यत्वात्।

यद्युच्येत-क्षीरजलयोर्हंसपक्षिणेव पृथक्करणयोग्य एव चित्तपिण्डयोः संयोगोऽभिप्रेत इति, तथा चेन्मुमुक्षोरपि हंससादृश्ये का नामानुपपत्तिः? सर्वेष्वपि हि प्राणिषु वृत्तिकरणकर्त्रधिष्ठानाधिष्ठितानां स्मरणचित्तजीवपिण्डप्रत्यगात्माख्यानां पञ्चानामपि समान एव संयोगोऽस्ति। तथा सति मुमुक्षुमात्रस्य कथं तदपृथक्कारः? तस्मान्मुमुक्षुविषयकपिण्डविलयवचनमयौक्तिकं प्रतिभातीति।

**उत्तरम्**:अत्रोच्यते-नायं दोषः। योगो हि त्रिविधः प्रसिद्धः। हठयोगो राजयोगो हठराजयोगश्चेति। तत्राद्यः-परलोकजिगमिषुत्वाद् हंस इव हृदयमांसपिण्डमुत्सृज्य तदितरचतुष्टयसहितो निर्गच्छति। द्वितीयस्तु निर्विशेषब्रह्मणि संयुक्तत्वात् पञ्चभिश्चोक्तैः सहित एव लीयते। तृतीयस्त्वापादमस्तकं कृत्स्नमपि देहं योगबलेन विलाप्य परब्रह्मणि लीनो भवति। एवं सति मुमुक्षोर्हंससादृश्यं कथमुपपद्यते?

मुमुक्षुहृदयपिण्डस्य चित्तकर्तृकब्रह्मानुसन्धानवृत्त्यादिद्वारा चिदग्निना दाह्यमानत्वाद् देहं विदार्यावलोकनेऽपि मांसपिण्डं न दृश्येतैव। मुमुक्षूणां तु सर्वेषामपि चिदनुसन्धानराहित्येन चित्तादिसरूपनाशस्याप्यसिद्ध्या भूताग्निना वाह्यत्वात् तत्पिण्डस्य विदार्यावलोकने दृश्यता स्यादेव। यद्यपि राजयोगिनो ब्रह्मलोकगन्तृत्वमन्यत्रोक्तं, तथाऽप्यत्र[१] ज्ञानयोग्यभिन्नत्वं विवक्षितमित्यनवद्यम्।

**६०.प्रश्नः**:तर्हि सरूपनष्टचित्तादेर्जीवन्मुक्तस्यापि देहविस्मृतिलक्षणाया विदेहमुक्तेर्देहविलापनलक्षणायाः सदेहमुक्तेश्चोपरिप्रापणीयत्वान्न कृतार्थताऽस्ति।

न च "सरूपोऽसौ मनोनाशो जीवन्मुक्तस्य विद्यते। अरूपस्तु मनोनाशो वैदेहीमुक्तिगो भवेत्। (अन्नपू.उ.4.18)"इति श्रीरामचन्द्रवचनमर्थवद् भवति। कुतः? सदेहमुक्तावेव चरमायामरूपनाशसंभवेन विदेहमुक्तावरूप-

१. 'तथाऽप्यन्यत्र ' इति मातृकायाम्।

नाशासंभवात्। न च सदेहमुक्तिविषयिणी योगशिखोपनिषद् गौणी व्याख्येया, विशेषवचनत्वात्।

तस्मादुभयाविरोधेन भवतैव वाच्यमिति।

**उत्तरम्:** अत्रोच्यते-विरूपमनोनाशो हि गौणमुख्यत्वेन द्विविधः। तत्र मुक्तिकोपनिषदुक्तो गौणो, योगशिखोपनिषदुक्तो मुख्य इत्यवगन्तव्यम्।

नैतेन गौणकल्पनेन श्रीरामवचनस्य वैयर्थ्यं शङ्क्यम्- स्थूलदेहस्य भूताग्निदह्यमानत्वचिदग्निदह्यमानत्वमात्रभेदवत्त्वेन परमपदप्रवेशतारतम्यहीनतया द्वयोरपि विदेहसदेहकैवल्ययोः प्रबलभेदाभावात्।

न च कारणब्रह्मीभूतत्वेन मुक्तस्यापञ्चीकृतसूक्ष्मदेहविलापनयोग्यत्वेऽपि कार्यब्रह्मीभूतत्वाभावात् पञ्चीकृतस्थूलदेहविलापनायोग्यत्वं शङ्क्यम्- स्थूलसमष्टिविलापनमात्रस्य कार्यब्रह्मानितरसाध्यत्वेन तद्व्यष्टिविलापनस्य हठराजयोगिसाध्यत्वात्।

तस्मात् सर्वं समञ्जसमित्यवगन्तव्यम्।

श्रोतव्यं मम किञ्चिदस्ति भगवन्नास्मत् परं मुक्तये
संतृप्तोऽस्मि तथाऽपि तावकपदाम्भोजेऽस्तु भक्तिर्दृढा ।
वक्तव्यं च न सौम्य ! किञ्चिदथ ते श्रौतं रहस्यं मया
सच्छिष्येण तथाऽप्यमुष्य मननं ग्रन्थस्य तेऽस्त्वन्वहम् ।।

**इति श्रीमदप्पयदीक्षितेन्द्रान्वयजस्याप्पयदीक्षितस्य[1]**

**कृतिषु**

**गुरुशिष्यसंवादः समाप्तः।**

---

1.अप्पयशिवस्यैवाप्पयदीक्षित इत्यन्यन्नाम। अस्मिन् विषये पीठिका द्रष्टव्या।

# योजनीयं किञ्चित्

१. ५१ पुटे ५१ पङ्क्तौ-

ब्रह्मलोकस्य गन्तारः

अत्र पादटिप्पणीत्वेन एतद् यौजनीयम्:-

"ब्रह्मलोकं गन्तार" इति सुवचं, ब्रह्मलोकशब्दस्य कर्मत्वात्। अग्रेऽप्येवम्।

२. ५१ पुटे १३ पङ्क्तौ-

अनन्तश्रुतिप्रतिपादितत्वात्।।

अत्र पादटिप्पणीत्वेन एतद् योजनीयम्:-

वस्तुतस्तु एतत्समर्थनायै "तेनेदं पूर्णं पुरुषेण सर्वम्" (श्वेताश्वतरोपनिषत् ३.९)इति मन्त्र उद्धरणीयः।



# अनुभूतिमीमांसाभाष्यादुद्धृतांशाः[1]

## १.दिदृक्षाधिकरणम्

षोडशयुष्मदस्मदस्मत्प्रत्ययगोचराणां षोडशविषयविषयिणां शेषशेषिणां तमःप्रकाशवद् विरुद्धस्वभावानाम् इतरस्मिन्नितरेतरात्मकताम् इतरेतरधर्मांश्च नैसर्गितयाऽध्यस्येतरेतरविवेकाग्रहणनिवन्धनो महान् प्रमादः पण्डितेष्वप्यवगम्यते।

कोऽयं प्रमादो नाम? उच्यते-यदैकात्म्यवादमात्रपर्यवसन्ना मतयः। सेतूल्लङ्घनेन सतां मार्गश्च दूषितम्, अन्धं तमः प्रविष्टं चेति।

तमेतं केचिदाहुः-पूर्वकर्मवशादिति, ईश्वरप्रसादाभावादित्यन्ये, अनियोज्यात्मवित्स्वभावत्वात् साधुरित्यपरे। पूर्वेषामिव युज्यत इत्येके।

एवं बहवो विप्रतिपन्नचित्ताष्षोडशात्माविवेकनिमित्तमजानन्त एव स्वस्वबुद्ध्यनुसारेण व्यवहरन्ति।प्रमादिनश्चाव्यवस्थमेवानुतिष्ठन्ति। म्लेच्छादिभिश्चाविशेषात्।यथा म्लेच्छाः शून्यवादिनः पञ्चस्कन्धवादिनो वा स्वैरं विषयभोगैकतत्पराः पुण्य-पाप-शौचाशौच-भोज्याभोज्यादि-भेदहीनाः सञ्चरन्ति,तद्वत्।

कथं नाम विवेकोदयः?यथा वा तथा बहुमुखं भासमानं शास्त्रं न्यायनिरूपितं सदेकमुखमाभातीत्यत्र पराशर आह—

---

1.ORI ms. हस्तप्रतिसंख्या A168.

" शास्त्रमापाततो भाति मुने बहुमुखं नृणाम्।निरूपितं तु न्यायेन विभात्येकमुखं पुनः [१] "-- इति।

न्यायकलापनिरूपणं च सलक्षणसूत्ररूपेण कार्यमित्यत्राह–

" शास्त्रनिर्णायकन्यायकलापं मुनिसत्तम।सूत्ररूपेण कुर्वन्ति शिवस्यैवाज्ञयैव तु[२] "–इति।

कुर्वन्तीति बहुवचनदर्शनात् शिवाज्ञावतां सूत्ररचनाधिकार इत्यवगन्तव्यम्।

तर्हि किं लक्षणं सूत्रस्येत्यत आह–

"अल्पाक्षरमसन्दिग्धं सारवद् विश्वतोमुखम्।अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः[३] "–इति।

यद्येवं स्यात्ततः सूत्रार्थस्य दुरवगाह्यत्वापत्तेः सूत्रार्थाभिव्यञ्जक-भाष्यापेक्षा सम्भवति।किं लक्षणं भाष्यस्येत्यत आह–

"मुनयश्च मनुष्याश्च प्रसादादेव शूलिनः।सूत्रार्थं भाष्यरूपेण यथावद् दर्शयन्ति च। सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः। स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः। तत्र भाष्यादिभिः सूत्रं साक्षाद् वेदनसाधनम्। श्रोतव्यं स्वगुरोः स्वात्मस्वरूपप्रतिपत्तये[४] " -इति।

के नाम षोडशयुष्मत्प्रत्ययगोचराः षोडशास्मत्प्रत्ययगोचराश्च?

१.पराशरोपपुराणम् बि.914 पत्रसंख्या 59

२.तत्रैव

३.तत्रैव

४.तत्रैव 59. बि

नहि बहवः शास्त्रेष्ववगम्यन्ते।अहमस्मत्प्रत्ययगोचरयोः द्वयोरेव प्रसिद्धत्वात्। नच सर्वज्ञैर्भगवत्पादैः शारीरकमीमांसोपक्रमावसरे बहुप्रत्यया निरूपिता इत्येवमादिबहुविधशङ्काकलङ्कितातरङ्गाणां विदुषामपि पुरुषाणां समाधाननिमित्तार्थजातमस्यामनुभूतिमीमांसायां प्रदर्शयिष्यामः।

अस्यां चतुर्विधजीवन्मुक्तकात्माकाध्यायचतुष्टायान्तर्गत-षोडशमात्रास्वरूपषोडशपादगर्भिताष्टोत्तरशतोपनिषन्मयाष्टोत्तर-शताधिकरणसूत्रजालान्याभान्ति।

तत्रेदमादिमं सूत्रम्—

**अथात आत्मदिदृक्षा।**

अथ व्रह्मात्मैक्यविज्ञानानन्तरम्। अतःशब्दो हेत्वर्थः।आत्मनो दर्शनश्रवणमननसंस्कृतान्तःकरणवृत्तिसाक्षिणोऽखण्डाकारस्य परमात्मन इति कर्मणि षष्ठी,द्रष्टुमिच्छा कर्तव्येति शेषः।सम्यग्दर्शनसाधनीभूतं निदिध्यासनं कर्तव्यमित्यभिप्रायः।

नन्वात्मनोऽङ्गुष्ठाकारपरज्योतिर्मयस्य परमपुरुषस्य "अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्ट[१]" इति, "अङ्गुष्ठमात्रो रवितुल्यरूप[२]" इति च परिच्छिन्नत्वश्रवणात् तस्यैतस्य प्रत्यगात्मन एव दर्शनयोग्यत्वं स्यात्। नतु परमात्मनोऽपरिच्छिन्नस्य। तथा च श्रुतिः "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो निदिध्यासितव्यः[३]" इति प्रत्यगात्मन एव द्रष्टव्यत्वं दर्शयति।नैवं परमात्मः क्वचिदपि द्रष्टव्यत्वं

१.कठोपनिषत् 6.17

२.श्वेताश्वतरोनिषत् 5.8

३.बृहदारण्यकोपनिषत् 2.4.5

दृश्यत इति।

अत्रोच्यते--यद्यपि श्रवणादिसाधनत्वेन प्रथमविहितद्रष्टव्यत्वं प्रत्यगात्मन एव।नैवमपि परमात्मनः द्रष्टव्यत्वं न क्वचिदपि दृश्यत इति वक्तुं युक्तम्। "भिद्यन्ते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे।दृश्यते त्वग्रया त्वग्रया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः[१]"।"ते ध्यानयोगानुगता अपश्यन् [२]"-इत्येवमादिश्रुतिभ्यः परमात्मनोऽपि द्रष्टव्यत्वावगमात्।नहि परमात्म-दर्शनादन्यत्र सर्वकर्मक्षयः सेत्स्यति। नच हृदयाद्यायतनपरिच्छिन्न-प्रत्यगात्मदर्शनमेवेह विवक्षितमिति शङ्क्यम्। आयतनवत्साकारात्म-ज्योतिर्दर्शनस्य सद्यो मुक्तिहेतुत्वाभावेन चोदनाया मन्दफलकत्व-विषयकत्वापत्तेः। भूतब्रह्मचोदनाया अनुष्ठानसापेक्षपुरुषतन्त्रत्वाभावेऽपि क्रममुक्तिहेतुतया सद्योमुक्तिप्रतिपादनपरेऽस्मिन् प्रकरणे तद्विवक्षा-नुपपत्तेः।

न च "आत्मा वा अरे द्रष्टव्य[३]" इत्यत्र आत्मदर्शनमद्वितीय-परावरविषयं स्यात्। यदि स्यात् ततः कर्तव्यान्तरानुपपत्तिप्रसंगेन दर्शनान्तरीयजिज्ञासाशुश्रूषामीमांसाविजिज्ञासानां वैयर्थ्यमापद्येत।

श्रुतयो हि "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः[४]" "अदृष्टं दृष्टमश्रुतं श्रुतं, अमतं मतं अविज्ञातं

---

१.मुण्डकोपनिषत् 2.2.8

२.श्वेताश्वतरोनिषत् 1.3

३.बृहदारण्यकोपनिषत् 2.4.5; 4.5.6

४.तत्रैव

विज्ञातं[१]", "दृष्टेर्द्रष्टा श्रुतेः श्रोता मतेर्मन्ता विज्ञातेर्विज्ञाता[२]", "आत्मनि खल्वरे दृष्टे श्रुते विज्ञाते सर्वमिदं विदितम्[३]" इत्येवमाद्या अविशेषेणैव मुमुक्षुणाऽऽत्मदर्शनादिषु नियोगं विनैव चोदयन्ति।

अत्र कस्याश्चिच्चोदनाया अर्थवत्त्वं कस्याश्चिदनर्थवत्त्वमित्येतदनुपपन्नम्।कुतः? प्रकृतश्रुत्यनुक्ताया अपि बादरायणसूत्रोक्तजिज्ञासायाः शुश्रूषाहेतुत्वेनार्थवत्त्वे सति किमुत श्रुत्युक्तश्रवणादीनाम्!

न तथेह मुमुक्षानन्तरं मोक्षो लभ्यते;जिज्ञासानन्तरं ज्ञानं च।यथा दिदृक्षा शुश्रूषा मीमांसाविजिज्ञासानन्तरं ध्यानश्रवणमनननिदिध्यासनद्वारेण दर्शनज्ञानविज्ञानसम्यग्ज्ञानानि लभ्यन्ते। न ह्येतासु मुमुक्षा दिदृक्षा जिज्ञासा शुश्रूषा मीमांसा विजिज्ञासासु काञ्चिदपहाय कस्यचिदपि मुक्तिर्भवितुमर्हति। उत्तरोत्तरकार्यत्वेन पूर्वपूर्वकारणत्वात्।

ननु दर्शनसम्यग्दर्शनयोः ज्ञानसम्यग्ज्ञानयोः जिज्ञासा-विजिज्ञासयोर्वा शास्त्रेषु न भेदोऽवगम्यते। "कश्चिद्धीरः प्रत्यगात्मानमैक्षत्[४]", "तस्मिन् दृष्टे परावरे[५]", "संपश्यन् ब्रह्म परमं याति नान्येन हेतुना[६]", "ज्ञात्वा तं मृत्युमत्येति[७]" " तमेव धीरो विज्ञाय[८]",

१.बृहदारण्यकोपनिषत् 3.8.11
२.बृहदारण्यकोपनिषत् 3.4.2()
३.बृहदारण्यकोपनिषत् 4.5.6
४.कठोपनिषत् 4.1
५.मुण्डकोपनिषत् 2.2.8
६.कैवल्योपनिषत् 10
७.कैवल्योपनिषत् 9
८.बृहदारण्यकोपनिषत् 4.4.21

"यतो वा इमानि भूतानि जायन्ते[१]", "तद् विजिज्ञासस्व[२]", "सोऽन्वेष्टव्यः स विजिज्ञासितव्य[३]" इत्येवमादिश्रुतिभ्यः सामान्येनैव प्रतिपादितत्वात्। तत्रैवं सति कथमत्र विशेषेण वाक्यार्था वर्ण्यन्ते? अथातो ब्रह्मजिज्ञासे-त्यनेनैवात्मैक्यावगतिहेतुभूतानां सर्वेषां शास्त्राणां फलितार्थत्वान्मुमुक्षूणां च मोक्षसिद्धेर्न पृथङ् निरूपणे प्रयोजनमस्तीत्यत उच्यते-

नहि शुश्रूषाहेतुभूतया जिज्ञासया शास्त्राणामर्थवत्ता मुमुक्षूणां मोक्षसिद्धिश्च भवितुमर्हतः।सम्यग्ज्ञानहेतुभूतया विजिज्ञासयैवोभय-सिद्धेः।यद्यपि श्रुत्यादिषु दर्शनादीनि सामान्येनैवोच्यन्ते। तथापि तत्रतत्र प्रकृतानुरोधेनार्थस्यावगन्तव्यत्वाद् बुद्धिमद्भिर्यथासंभवमूह्यम्।

प्रकृते तु मुमुक्षादिषड्विधेश्छाया(षड्विधेच्छायाः?) क्रमदर्शनात् षड्विधप्रतिबन्धनिवृत्त्यात्मकफलभेददर्शनाच्च पृथङ् निरूपणे प्रयोजन-मस्त्येव।

यदि जिज्ञासामात्रेण साधको मुक्तिमाप्नुयात् तदा शुश्रूषाद्या-नर्थक्यप्रसङ्गाच्छ्रवणादित्रयप्राधान्येन प्रवृत्तायाः श्रुतेर्बाधोऽनिवार्यः स्यात्।कुतः? श्रवणप्राधान्येनोपवर्णितपूर्वप्रबन्धानामपि बाधे सति प्रकृतार्थबाधापत्तेः। या च बादरायणाचार्योक्ता जिज्ञासा तस्या उपसर्गविशिष्टत्वाभावेन सम्यग्ज्ञानहेतुत्वाभावाच्छ्रवणाधिकारि-विषयत्वाच्च दर्शनात् परं शुश्रूषायाः पूर्वं जिज्ञासाख्या काचिच्चित्तवृत्तिः

---

१.तैत्तिरीयोपनिषत् 3.1
२.तैत्तिरीयोपनिषत् 3.1
३.छान्दोग्योपनिषत् 8.7.1

द्रष्टव्य इति श्रुतिचोदितस्य तथा दर्शिनश्चोत्तमाधिकारिण उदेतीत्यवगन्तव्यम्।

तथा च "अनावृत्तिश्शब्दात्[१]"इत्युपसंहारे विस्पष्टक्रममुक्त्यनुरोधेनोपक्रमे सन्दिग्धेऽपि देवयानमार्गसाधनीभूतज्ञानविशेषस्यैव चिन्त्यत्वान्न सम्यग्दर्शनार्थो व्याससूत्रोपक्रम इति वक्तुं शक्यम्। तत्र चैवं दिदृक्षाया उपसर्गविशिष्टत्वाभावेऽपि सम्यग्दर्शनस्यैवाभिप्रेतत्वेन सम्यग्दर्शनादपि परमरहस्यानां स्वानुभवानामसकृन्मध्ये प्रपञ्चितत्वेन च वैशेष्योपपत्तेः।

यच्च पुनः "जन्माद्यस्य यतः[२]" इत्युत्तरत्र जगत्कारणत्वादिब्रह्मलक्षणमुपपादितं, तेन च हेतुना शुश्रूषायाः पूर्विका जिज्ञासाऽभिप्रेतेति युज्यते।नतु निदिध्यासनात् पूर्विका विजिज्ञासा। कुतः? सम्यगवधारितवस्तुलक्षणस्येव विज्ञानिनः सम्यग्ज्ञानसिद्ध्यै विजिज्ञासोपपत्त्या वस्तुलक्षणश्रवणोपेक्षानुपपत्तेः।

ननु पाराशरे श्रूयते—

"मुमुक्षुत्वं तु मर्त्यानां मन्दं मन्दतरं बुध।तीव्रं तीव्रतरं चैव तथा चैवोत्तरोत्तरम्। मुमुक्षुत्वस्य वैशेष्यं[३] मया वक्तुं न शक्यते। विद्यासाधनपौष्कल्ये मुमुक्षुत्वे महत्तरे। सा तु साक्षात् परा विद्या प्रसादादेव जायते[४]"— इति; तत्र उत्तरोत्तरमुमुक्ष्वतिरिक्तानां मन्दतराद्यधिकारिणामेवैता दर्शनादिसर्वचोदना भवितुमर्हन्ति।कुतः?

१.ब्रह्मसूत्रम् 4.4.22

२.ब्रह्मसूत्रम् 1.1.2

३.वैशिष्ट्यमिति मातृकापाठः

४.पराशरोपपुराणम् ORI ms. हस्तप्रतिसंख्या B.914पत्रसंख्या 64.

सर्वजन्मन्यकृतोपासनत्वेन चित्तशुद्धेः संपादनीयत्वात्। दर्शनाद्यै-र्ह्युपासनैश्चित्तशुद्धिरेव संभवति। सा तु पूर्वोपासकस्य वर्तमानजन्मनि दर्शनाद्यनपेक्षं स्वयमेव भवितुमर्हति।तस्यैतस्योत्तरोत्तरमुमुक्षुत्वे सति सा परा विद्या साक्षादपरोक्षतः विद्याप्रसादादेव जायते। नत्वात्मा-परोक्षविद्याप्रतिपत्तये दर्शनादीन्यपेक्षितानि भवन्तीत्यर्थः। तथाहि ऋभोरन्नपूर्णाप्रसादात् पञ्चभ्रमोदयनिवृत्तिद्वारा स्वयं जीवन्मुक्तिलाभः श्रूयते[१]।तस्माद्दर्शनादिचोदना अधिकारिविशेषविषया इत्यत्र,

उच्यते—वेदान्तिनामभ्युपगमो ह्यनवस्थितो भवति।कुतः?

केचिदाहुः—मनननिदिध्यासने विनैव श्रवणमात्रेण बह्मात्मैक्या-वगतिर्भवितुमर्हतीति।केचित्तु जिज्ञासामात्रेणेति। अन्ये तूक्तप्रकारेण मुमुक्षामात्रेण प्रसादवशाद्दर्शनादिसर्वानपेक्षं स्वयमेव जायत इति।

कुत एवं विप्रतिपत्तयः संभवन्ति, शास्त्रार्थनिर्णायकन्याय-कलापाध्ययनाभावात्।

ये पुनरेतच्छ्रौतन्यायकलापमधीयते न हि तेषां सर्वशास्त्र-समन्वयविदामेवं भवितुमर्हति। भिन्नभिन्नार्थवत्प्रतीयमानवाक्याना-मौचित्येन गतिकल्पनसामर्थ्यसंभवात्।

ये त्विह जन्मनि उत्तरोत्तरमुमुक्षवस्तेषां पूर्वोपासकानां संशुद्धचित्तानामप्यपरोक्षविद्याप्रतिपत्तये दर्शनमात्रं नापेक्ष्यते।अपितु श्रवणादीनि चापेक्ष्यन्त एव।कुतः? श्रवणादीनां त्रयाणामपि क्रमेणावगत्यर्थकत्वसामान्यात्। "सा तु साक्षात् परा विद्या[२]"इत्यत्र

१.अन्नपूर्णोपनिषत् 1.16

२.(?)

सा विद्या अपरोक्षतः प्रसादात् गुरुप्रसादादन्तःकरणप्रसादात् प्रत्यागात्मप्रसादाच्च जायते।प्रसादत्रयस्य श्रवणादित्रयहेतुत्वात्।

ऋभोस्त्वन्नपूर्णोपनिषद्यनुग्रहमात्रेण श्रूयमाणेऽपि जीवन्मुक्त्यादिलाभे[१] वराहोपनिषदा बहुधा श्रुतात्मत्वाद्यवगमान्न कस्यचिदपि श्रवणादित्रयं विना सम्यग्ज्ञानमुदेति[२]। पञ्चभ्रमनिवृत्ती तु कुतश्चन प्रमादादिति मन्तव्यम्।

ये पुनर्मनननिदिध्यासनानपेक्षं श्रवणमात्रेणात्मावगतिर्मोक्षश्चेत्यवगच्छन्ति, तत्र तेषां किं प्रमाणम्? एवं चेद् ब्रूयुः—

" विज्ञानकारणस्यास्य श्रवणस्य द्विजोत्तम। प्राधान्यं मननादस्ति निदिध्यासनतोऽपि च। उत्पत्तावन्तरङ्गं हि ज्ञानस्य श्रवणं बुध। तटस्थमन्यव्यावृत्तं मननं चिन्तनं तथा।।[३]"

—इति पराशरेण ज्ञानस्योत्पत्तौ मनननिदिध्यासनाभ्यां श्रवणस्यान्तरङ्गत्वेन प्राधान्यस्याभ्युगतत्वादित्यत्रोच्यते।यद्यपि श्रवणस्य प्राधान्यं भवितुमर्हति,मनननिदिध्यासनाभ्यां प्राक् कार्यत्वात्। यथा ब्रह्मानन्यत्वेऽपि जगज्जीवयोर्जगज्जीवान्यत्वात् ब्रह्मण एवानन्यत्वात् ब्रह्मण एव प्राधान्यं तद्वत्।

तथापि द्विरूपा हि वेदान्तानां प्रवृत्तिः क्वचित् ब्रह्मलक्षणप्रतिपादनपरा क्वचित् ब्रह्मात्मैक्यप्रतिपादनपरा च। तत्राद्या क्रममुक्तिसाधनभूतपरोक्षतिहेतुभूतश्रवणोपयुक्ता भवति।द्वितीया तु

१.अन्नपूर्णोपनिषत् 1.16

२.वराहोपनिषदि वराहरूपिणा विष्णुना ऋभुरुपदिष्ट इति कथा कल्पिता।

३.पराशरोपपुराणम् ORI ms. हस्तप्रतिसंख्या B.914पत्रसंख्या 40b.

सद्योमुक्तिसाधनीभूतापरोक्षावगतिहेतुभूतनिदिध्यासनोपयुक्ता भवतीति परोक्षज्ञानमपेक्ष्य श्रवणस्य प्राधान्यम्, अपरोक्षज्ञानमपेक्ष्य मनन-निदिध्यासनयोः प्राधान्यमिति युक्तम्।

तथाहि—मनननिदिध्यासनानपेक्षमुत्पन्नस्य ज्ञानस्य प्रति प्रतिबन्धवत्तया फलजनकत्वं वारयति पराशरः-

" ज्ञानानले हि सञ्जाते सुदीप्ते पापकाननम्।क्षणाद् दग्धं भवेदेव प्रतिबन्धविविर्जिते।मणिमन्त्रौषधैर्वह्निः सुदीप्तोऽपि यथेन्धनम्। प्रदग्धुं नैव शक्तः स्यात् प्रतिबन्धस्तथैव हि।ज्ञानाग्निरपि सञ्जातः सुदीप्तः सुदृढोऽपि च। प्रदग्धुं नैव शक्तः स्यात् प्रतिबन्धस्तु कल्मषः।भावना विपरीता या या च संभावना शुक।कुरुते प्रतिबन्धं सा खलु ज्ञानस्य नापरम्।वाक्यानुग्रहकन्यायपरिशीलनलक्षणात्। मननाच्च तथैकाग्र्यात् निदिध्यासनसंज्ञितात्। भावने द्वे निवर्तेते निवृत्त्यैव तयाऽनघ।ज्ञानस्य प्रतिबन्धश्च यथा दहति पावक। तथा सकारणं पापं प्रबोधाग्निर्दहत्यसौ[१]"—इति।

तथा च व्यासेन "ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात्[२]" इति सूत्रे निवृत्तप्रतिबन्धस्य ज्ञानस्यैव सद्योमुक्तिहेतुतायाः प्रदर्शितत्वेन सप्रतिबन्धस्य ज्ञानस्य क्रममुक्तिसाधनत्वेनाभिप्रेतत्वात् वेदान्तविज्ञान-सुनिश्चितार्थाः इति श्रुतेर्विज्ञानिनामपि सप्रतिबन्धत्वे ब्रह्मलोकगमनस्य प्रतिपादितत्वाच्च प्रतिबन्धद्वयनिवर्तकमनननिदिध्यासनानपेक्षं श्रवण-मात्रेणोत्पन्नस्य ज्ञानस्य परोक्षत्वात् सद्योमुक्तिजनकत्वं सुतरामनु-

१.पराशरोपपुराणस्य मातृकायाम् एते श्लोका मया नोपलब्धाः।

२.ब्रह्मसूत्रम् 3.4.51

पपन्नम्।

"अथातो ब्रह्मजिज्ञासा[१]"इत्यत्र तूक्तं ज्ञानं सप्रतिबन्धं क्रममुक्तिनिमित्तं परोक्षमेव।कुतः?" जन्माद्यस्य[२]" इत्यनेन ब्रह्मलक्षणस्य तटस्थसंज्ञस्य प्रतिपादित्वात् स्वरूपलक्षणस्य कण्ठतोऽनुक्तत्वाच्च। न च तत्रत्याधिकारिण उत्तरोत्तरं मुमुक्षुत्वं वक्तुं युक्तम्।तत्त्वमस्यादि-वाक्यार्थश्रवणमात्रस्यानपेक्षितत्वात्।

उत्तरोत्तरमुमुक्षुर्हि श्रवणमात्रमपेक्षते, न तु वस्तुलक्षणा-वबोधम्।पूर्वावगतवस्तुलक्षणत्वात्।

ये च पुनर्जिज्ञासामात्रेण मुक्तिरित्याहुः,तेषां किं प्रमाणम्? अथातो ब्रह्मजिज्ञासेत्येतदेव प्रमाणमिति चेद् ब्रूयुस्तत्रोच्यते—

नहि जिज्ञासामात्रेण मुक्तिरवगम्यते। जिज्ञास्यभूतब्रह्मावगति-हेतुभूतश्रवणादिचोदनात्रयावगमात्।यद्यपि दिदृक्षा नापेक्ष्यते, पूर्वजन्मनि भ्रूसन्ध्यक्षिहृदयाद्यायतनवन्निर्गुणब्रह्मोपासकस्यादृष्टात्मपरिच्छिन्न-परज्ज्योतिःस्वरूपस्य च मुमुक्षोरिह जन्मनि स्वयं शुद्धचित्तस्य दिदृक्षानपेक्षं जिज्ञासोत्पत्तिसंभवात्।पूर्वोपासनमहिम्ना मुमुक्षुत्वमदृष्टात्मत्वेन पुनर्जननं च। न ह्यनया दिदृक्षानपेक्षया जिज्ञासोः श्रवणाद्यनपेक्षा च स्यादिति वक्तुं शक्यम्।जिज्ञासामात्रेण पुनर्जन्मनि वृत्त्यसंभवात्।दृष्टश्रुतब्रह्मणोर्हि विदुषोर्देवयानः पन्था अनावृत्तिश्च श्रुतिषूद्धुष्यते, नतु दिदृक्षुजिज्ञास्वोः।

ये च तावद्दर्शनमात्रेण मुक्तिरित्याहुः,तेषां किं प्रमाणम्? "का वरणा का नासि[३]"इति निरुच्य, "स कस्मिन् प्रतिष्ठितः भ्रुवोर्घ्राणस्य

---

१.ब्रह्मसूत्रम् 1.1.1
२.ब्रह्मसूत्रम् 1.1.2
३.जाबालोपनिषत् 2.4

च यस्सन्धिस्तत्र[१]" इति जाबालाद्याः श्रुतय इति चेद् ब्रूयुस्तत्रोच्यते–

नहि व्यष्टिवाराणस्यां भ्रूमध्यरूपिण्यां समष्टिवाराणस्यां काश्यां च विलीनान्तःकरणदेहयोः सद्योविमुक्तिर्मुक्तिश्रुत्यादिष्ववगम्यते, क्रममुक्तेरेवावगम्यत्वात् ।तस्माद् दर्शनमात्रेण सद्योमुक्तिरनुपपन्ना, दर्शनानन्तरश्रवणादिचोदनावगमात् ।तर्हि दृष्टश्रुतस्य ब्रह्मणोर्विदुषोः स्वमानफलत्वे श्रुतमतब्रह्मणोर्भूतविज्ञातब्रहणोश्च समानफलत्वापत्त्या द्रष्टव्य इत्याद्युत्तरोत्तरचोदनाया वैयर्थ्यप्रसंग इति चेन्न, चतुर्णां दृष्टश्रुतमतविज्ञातब्रह्मणां समानेऽपि कैवल्यफले तारतम्येन कालभेदसंभवात्। उत्तरोत्तरचोदनाया वैयर्थ्यमनुपपन्नम्।

कथं कालभेदः? उच्यते– दृष्टब्रह्मणोर्विदुषोर्हि ब्रह्मलोके ब्रह्मणो(?)श्रुतब्रह्मणोर्विदुषोश्च सह परमपदप्रवेशसाम्येऽपि श्रवणाधिकृताधिकारिणोर्मन्दमध्यमत्वेनैतावुद्दिश्य चतुर्मुखब्रह्म-प्रसादोत्पत्तेः तत्त्वोपदेशस्वरूपिण्याः कालभेदोपपत्तेः।

कथं श्रुतब्रह्मणोऽपि पुनः श्रवणापेक्षेति चेन्नैष दोषः। ऐहिकदेहपातावसरे मरणयातनया श्रुतार्थस्य विस्मृतत्वात्। मतविज्ञातब्रहणोस्त्वारब्धक्षये कैवल्यसाम्येऽपि आद्यस्य विपर्यासप्रतिबन्धनिवर्तकाभ्यासनिष्ठत्वात्, द्वितीयस्य निष्कृतिबन्धापरोक्षात्मावगतिनिष्ठत्वेनाभ्यासातीतत्वाच्च भेद उपपद्यत इत्यतो विविधचोदनाया विविधमवान्तरफलमेकं मुख्यफलमित्यवगन्तव्यम्।

तर्ह्येवं दर्शनज्ञानयोः समानमुख्यफलत्वेऽपि निदिध्यासनेन सम्यग्दर्शनीयः ब्रह्माभिन्नः परमात्मा किं लक्षण इत्याकाङ्क्षाया-

१.जाबालोपनिषत् 2.6

मिदमन्यत् सूत्रं प्रयुज्यते–

**सत्याद्यात्मक एषः।**

एष सम्यग्दर्शनीय आत्मा सत्याद्यात्मकः।सत्यज्ञानानन्तः स्वरूपः। सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतेः।

अत्राह– श्रोतव्यमन्तव्यनिदिध्यासितव्यात्मनो निरायतनत्वेन प्रत्यगभिन्नलक्ष्यार्थतया सत्यादिलक्षणानां वास्तवत्वमुपपद्यते। न तु दर्शनीयस्य "दक्षिणेऽक्षन् पुरुष[१] " इत्यादिश्रुतिभ्य आयतनवत्त्व-श्रवणात्।प्रत्यग्भिन्नार्थतया सत्यादिलक्षणानामुपासकबुद्धिप्ररोचनार्थकत्वेन कल्पितत्वोपपत्तेश्च।

तथा हि-"उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्[२]"।"कप्यासं पुण्डरीकं वेश्म य एष आदित्यहिरण्य-श्मश्रुर्हिरण्यकेशः हिरण्मयः पुरुष[३]" इत्यादिश्रुत्युक्तायतनवत्पुरुषस्य साधकोपासनार्थे परिकल्पितत्वं सर्वैरपि वेदान्तिभिरभिप्रेयते। तस्मात् सत्यादिलक्षणानि दर्शनीये प्रथमचोदनाविषय आत्मनि कल्पितानि भवितुमर्हन्तीत्यत्र-

उच्यते– नह्युपासनादर्शनीय आत्मा तल्लक्षणानि वा कल्प्यन्त इति वक्तुं युक्तम्, आयतनविशेषस्यैव कल्पितत्वात्। दर्शनीया-त्मनस्तल्लक्षणानां च निर्गुणत्वेन कल्पितत्वानुपपत्तेः। सगुणब्रह्मणो ह्युपास्यस्य उमासहायत्वादिगुणा हृदयाद्यायतनानि च उपासनार्थे

१.बृहदारण्यकोपनिषत् 2.3.5

२.कैवल्योपनिषत् 7

३.छान्दोग्योपनिषत् 1.6.7

(र्थं?)कल्प्यन्ते।तदुपासनफलं चाभ्युदयिकमनित्यं च भवति।

तथा हि- चतुर्विधान्युपासनानि शास्त्रेष्ववगम्यन्ते।कानिचित् सम्यग्दर्शनार्थानि श्रवणादीनि।कानिचित् क्रममुक्त्यर्थकायतनवन्निर्गुणब्रह्मदर्शनार्थानि। कानिचित् चित्तशुद्ध्ययर्थानि आयतनवत्सगुणब्रह्मविषयाण्यभ्युदयार्थानि च।कानिचिच्च कर्मसमृद्ध्यर्थानि प्रतीकादिविषयाणि।तत्रैवं सति सगुणब्रह्मोपासनानां चित्तशुद्ध्यर्थत्वेऽपि साधकाभिसन्धिभेदैः सालोक्यादिसगुणमुक्तिफलत्वश्रवणात् क्रममुक्तिवैलक्षण्येन पुनरावृत्तिसंभवाच्चानित्यफलत्वमुपपद्यते, "आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन। मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते[१]"—इत्यादिस्मरणात्।

नत्वेवं सगुणोपासनातिरिक्तत्रिविधोपासनानां अभिसन्धिभेदैः फलानि भिद्यन्ते;अभिसन्धिभेदासंभवात्।यत्र कुत्राप्युपासने उपासनान्तरासाधारणं फलमभिहितं चेदुभयफलमपि न साधको विन्देत, मिश्रफलत्वात्तदुपासनस्य। फलदातेश्वरोऽप्यतीव श्रमी भवेत्! तस्माद् यथाशास्त्राभिसन्धिपूर्वकं यथावच्छास्त्रार्थपर्यालोचनेन सम्यगुपासनपरा ये पुरुषास्त एव तत्तदुपासनासाधारणानि फलान्यश्नुवन्तीति मन्तव्यम्।

ननु पूर्वं श्रुतब्रह्मणः क्रममुक्तिः फलं निर्दिष्टमिदानीं तु सम्यग्दर्शनार्थानि श्रवणादीनीत्युच्यते। तस्मात् पूर्वापरविरोधप्रसंग इति चेन्न,सामञ्जस्यात्। यदि मनननिदिध्यासनात्मकोपासनाङ्गत्वेन श्रवणात्मकमुपासनं कृतं, तदा तत्सम्यग्दर्शनार्थं भवति। यदि च श्रवणाङ्गत्वेन मनननिदिध्यासने कृते, तदा श्रवणस्यैवाङ्गित्वेन प्राधान्या-

१.भगवद्गीता 8.16

दितरयोरङ्गत्वेनाप्राधान्याच्चाङ्गेतरानिवत्या(?)प्रतिबन्धरपायासंभवात् तादृशमङ्गीभूतं श्रवणं क्रममुक्त्यर्थमेव भवितुमर्हति।

प्रतिबन्धद्वयनिवृत्तौ हि श्रुतब्रह्मणः सम्यग् दर्शनं स्यात्।

अन्यथा श्रवणैकप्रधानस्य प्रतिबन्धनिवर्तकमनननिदिध्यासनयोरतिश्रद्धारहितस्य च विदुषः कथं सम्यग्दर्शनं स्यात्?

एवमेव श्रवणादित्रयाङ्गत्वेनायतनवन्निर्गुणोपासनं कृतं चेत् तदपि क्रमेण सम्यग्दर्शनात् सद्योमुक्त्यर्थं भवति। अन्यथा चेत् क्रममुक्त्यर्थमेव।श्रुत्या तु द्रष्टव्य इत्युत्तरोत्तराङ्गिनां पूर्वपूर्वाङ्गत्वमुच्यते।यद्यपि तत्र च पूर्वपूर्वाङ्गिनामुत्तरोत्तराङ्गत्वमाशङ्क्यते।तदा श्रवणात् पूर्वकस्य दर्शनस्याङ्गित्वापत्त्या क्रममुक्त्यर्थकता प्रसज्यते।

श्रुतयश्च दर्शनचोदनापूर्वकमेव श्रवणादिषु चोदयन्ति,नतु दर्शनानपेक्षम्। तथा ह्यात्मा वाऽरे द्रष्टव्य इत्यादि पूर्वोक्ताः स्पष्टार्था दृश्यन्ते।

ननु जिज्ञासुः पुरुषस्तत्त्वमसीति केवलं बोध्यते, नतु व्यापारेषु नियुज्यते।अहं ब्रह्मास्मीत्यवगतेरनुष्ठानानुपयोगाद्दशमस्येव सद्यः शोकमोक्षसंभवाच्च।यथा दशमो नष्ट इति भ्रान्त्या शोचन् पुरुष आप्तोक्तिश्रवणमात्रेणात्मानं विज्ञाय शोकं मुञ्चति। नत्वात्मविज्ञानायाप्तेनान्वेषणादिव्यापारेषु नियुज्यते,तद्वत्। तर्हि के नियुज्यन्ते?

उच्यते— ये पुनर्दिदृक्षवो मिमंववो(मीमांसवो?)विजिज्ञासवश्च दर्शनमनननिदिध्यासनाधिकारिण उच्यन्ते, त एव।

कुतः? दर्शनादिषु नियोगदर्शनात्।दर्शनाद्यर्थे विविक्तासनादिसंपादनव्यापारानुष्ठानदर्शनाच्च इत्यत्रोच्यते।

अवबोधनं नाम यत् तत्त्वमस्यादिवाक्यैर्जिज्ञासुरवबोध्यते,तत्। नियोगस्तु यजेतेत्यादिपूर्वमीमांसावाक्यैस्स्वर्जिगमिषुर्ज्योतिष्टोमा-द्यनुष्ठानेषु नियुज्यते। न ह्येतदुभयमपि दिदृक्षादीनां संभवति।कुतः? दर्शनादिषु चोद्यमानत्वात्।

चोदनं नाम यद् द्रष्टव्य इत्याद्यवगम्यते।तदेतच्चोदनावबोधनपरा एव सर्वे वेदान्ताः। नतु नियोगपरं किञ्चिदपि वेदान्तवाक्यं विद्यते। प्रतीकोपासनसगुणोपासनतदङ्गभूतस्नानजपपुण्ड्रमालाधारणा-द्यनुष्ठानानामप्यौपनिषदानां नियोज्यविषयत्वाभावे सति कथमात्म-दर्शनादीनां नियोज्यविषयत्वं वक्तुं शक्यम्? कथं च परोक्षज्ञान-साधनत्वेन प्रणीतव्याससूत्रभाष्योत्तरमीमांसायामपि प्रतिषिद्धस्य नियोगस्यात्रापरोक्षानुभवसाधनत्वेन प्रणीयमानसूत्रभाष्योत्तरोत्तर-मीमांसायाम् अवकाशः स्यात्?

ननु यस्य पुरुषस्य मुमुक्षामात्रेण मोक्षो न संभवति, तस्य मोक्षसाधनीभूतसम्यग्दर्शनापेक्षोपपत्त्या द्रष्टव्य इति चोदनोपपद्यते। यस्य च दिदृक्षामात्रेण दर्शनं न संभवति तस्य दर्शनसाधनीभूत-श्रवणापेक्षोपपत्या श्रोतव्य इति चोदनोपपद्यते। मननापेक्षोपपत्त्या मन्तव्य इति चोदना।यस्य पुनः श्रवणमात्रेण ज्ञानं नोत्पद्यते, तस्य ज्ञानसाधनीभूतनिदिध्यासनापेक्षोपपत्त्या निदिध्यासितव्य इति चोदनेत्यतः मुमुक्षादीनामुत्तरोत्तरसाधनत्वेन पूर्वपूर्वसाधनत्वं वक्तुं युक्तम् इत्यत्रोच्यते-

नहि कस्यचिदपि मुमुक्षामात्रेण मोक्षो भवितुमर्हति, सर्वज्ञस्य सर्वशक्तेः परमेश्वरस्यापि स्वाधिकारप्रारब्धबन्धत्वेन स्वत एवारब्ध-

मोक्षासंभवात्। परमेश्वरो हीच्छामात्रेण जगत्सर्गादिशक्तोऽपि न स्वारब्धकर्म मोचयितुं शक्नुयात्। "यावदधिकारमवस्थितिराधिकारिकाणाम्[1]" इति व्यासाचार्येण दर्शितत्वात्।

स्वाधिकारावसानकालानपेक्षं मध्यकाले स्वाधिकारमोक्षच्छायां केनचित् प्रपञ्चसृष्ट्यादिव्यापारोपरमादिहेतुनोत्पन्नायामपि मोक्षो न संभवत्येवेत्यवगन्तव्यम्।

न च दिदृक्षामात्रेण कस्यचिदपि दर्शनं भवितुमर्हति। अभ्यासानपेक्षं गर्भस्थितिकाल एव "अहं मनुरभवं सूर्यश्च[2]" इति संदृष्टात्मनो वामदेवस्यापि- " शुको मुक्तो वामदेवोऽपि मुक्तस्ताभ्यां ताभ्यां विना मुक्तिभाजो न सन्ति।शुकमार्गं येऽनुसरन्ति धीराः सद्यो मुक्तास्ते भवन्तीह लोके।वामदेवं येऽनुसरन्ति नित्यं कृत्वा जनित्वा च पुनः पुनस्तत्।ते वै लोके क्रममुक्ता भवन्ति योगैः साङ्ख्यैः कर्मभिः सत्त्वयुक्तैः[3]" इति वराहश्रुतिभ्यो योगाद्यभ्यासपूर्वमेव क्रममुक्तत्वावगमात्।

वामदेवो दिदृक्षामात्रेण सम्यगात्मानं दृष्टवानित्येतदयुक्तम्। नच जिज्ञासामात्रेण कस्यचिदपि ज्ञानं भवितुमर्हति। परमेश्वरमुखाच्छ्रवणानन्तरमपि शुकस्य बहुकालाभ्यासश्रवणात्।

शुको हि सद्योमुक्त इति प्रसिद्धम्।स किं श्रवणात् सद्योमुक्तः? उत निदिध्यासनात्? नाद्यः, मुक्तस्य निदिध्यासनरूपाभ्यासा-

---

१.ब्रह्मसूत्रम् 3.3.32

२.बृहदारण्यकोपनिषत् 1.4.10

३.वराहोपनिषत् 4.34

नुपपत्तेः,श्रवणानन्तराभ्यासदर्शनाच्च। यदि तु निदिध्यासनात् सद्योमुक्त इति युक्तं, न च विजिज्ञासामात्रेण विज्ञानं भवितुमर्हति।श्रवणेन विदुषो जनकस्यापि विज्ञानसाधनीभूतमननहेतोः पुनःपुनर्याज्ञवल्क्य-धामगमनावगमात्। नापि सञ्जिज्ञासामात्रेण कस्यचिदपि सम्यग्ज्ञान-मुत्पद्येत। श्रवणमननाभ्यां विज्ञानिनोऽपि याज्ञवल्क्यस्य सम्यग्ज्ञान-साधनीभूतनिदिध्यासनहेतोः संन्यस्तत्वावगमात्। निदिध्यासन मात्रेण तु सर्वेषामपि सद्योमुक्तिसाधनीभूतं सम्यग्ज्ञानमुत्पद्येत। दर्शनादि-साधनानामनुष्ठितपूर्वत्वेन द्रष्टव्य इति सर्वचोदनासार्थत्वसंभवात्। मुमुक्षादीनामुत्तरोत्तरसाध्यत्वेन पूर्वपूर्वसाधनत्वं वक्तुं युक्तम्। न तूत्तरोत्तरसाधनत्वेन पूर्वपूर्वसाध्यत्वमिति।

अत्राह –किम् अथातो ब्रह्मजिज्ञासेति व्यासाचार्योक्ता जिज्ञासा सम्यग् ज्ञानसाधनत्वेनाभिहिता, आहोस्वित् परोक्षज्ञानसाधनत्वेनेति संशयः। तत्र तावन्मुमुक्षादिदृक्षाशुश्रूषामीमांसाविजिज्ञासातिरिक्ताया अपि तस्या जिज्ञासायाः परमर्षिप्रोक्तत्वाद् अपरोक्षज्ञानसाधनत्वेनैवा-भिहितेति प्राप्तम्।

अत उच्यते–निदिध्यासनहेतुभूताया विजिज्ञासाया एवापरोक्ष-ज्ञानसाधनत्वात् परोक्षज्ञानसाधनत्वेनैवाभिहितेति। परमर्षिभिस्तु निर्गुणब्रह्मपरोक्षज्ञानादर्वाचीनं सगुणोपासनमप्यभिधीयते। न तावता तेषां काचिद् हानिरस्ति।

को नाम जिज्ञासासञ्जिज्ञासयोरर्थभेदः? उच्यते– हरप्रहर-शब्दयोरिवोपसर्गेणार्थभेदसंभवात्।अर्थभेदश्रवणस्य प्रकृत आवश्य-कत्वाच्च। तथैव ज्ञानसम्यग्ज्ञानयोर्दर्शनसंदर्शनयोर्दिदृक्षासन्दिदृक्षयो-

श्चार्थभेदसंभवात्तेन पूर्वापरसामञ्जस्यसंभवाच्च। "परोक्षं ब्रह्मविज्ञानं शाब्दं देशिकपूर्वकम्। बुद्धिपूर्वकृतं पापं कृत्स्नं दहति वह्निवत्।अपरोक्षात्मविज्ञानं शाब्दं देशिकपूर्वकम्। मूलाविद्याविनाशे तु तमसश्चापि भानव[१]" इत्येवं परोक्षापरोक्षज्ञानयोः फलभेददर्शनात्। परोक्षज्ञानस्य च श्रवणजन्यस्यैव फलवत्त्वदर्शनेन देवयानगतिप्रदत्वेन चाश्रुतब्रह्मपूर्वाया जिज्ञासायाः परोक्षज्ञानफलजनकत्वस्याप्यनुपपत्तेः। श्रवणं प्रत्यपि साधनत्वानुपपत्तौ कथं श्रुतज्ञानं प्रति जिज्ञासायाः साक्षात् साधनत्वं वक्तुं शक्यम्? यदि शुश्रूषां प्रति साधनत्वमुचितं, जिज्ञासुर्हि पुरुषः श्रवणेच्छुर्भवति। एवं सति जिज्ञासामात्रेण यस्य ज्ञानं नोत्पद्यते, तद्विषयाः श्रवणादिचोदनाः इति वक्तुमयुक्तत्वादुत्तरोत्तर-चोदनानां साध्यविषयत्वमेवेत्युपपन्नम्।

नन्वेवं द्रष्टव्य इत्यादिचोदनानामुत्तरोत्तरसाध्यविषयत्वेऽपि दर्शनानन्तरकार्यां जिज्ञासामनुक्रम्य प्रवृत्तस्यास्य सूत्रस्यापरोक्षज्ञानं विषय इति कथं वक्तुं शक्यम्? यद्यपि दर्शनज्ञानयोः समानगति-कत्वादस्य च परोक्षज्ञानतुल्यविषयत्वात् व्याससूत्रसाम्यं भवितुमर्हति,न त्वाधिक्यम्; अपरोक्षज्ञानविषयत्वानवगमात्।

अत्रोच्यते– सत्यमेवं स्यात्; यदि जिज्ञासापूर्वकार्यां दिदृक्षा-मुपक्रम्यैतत् सूत्रं प्रवर्तितम्। विजिज्ञासापूर्वकार्यां सन्दिदृक्षामभिप्रेत्यैव हि प्रवर्तितमित्यवोचाम। तस्मादपरोक्षज्ञानविषय एवैतत्सूत्रोपक्रम इत्यनवद्यम्।

---

१.(?)

## २.परप्रेमास्पदाधिकरणम्।

**परप्रेमास्पदत्वात्।**

"अहमेव सुखं नान्यदन्यच्चेन्नैव तत्सुखम्।अमदर्थं नहि प्रेयो मदर्थं न स्वतः प्रियम्। परप्रेमास्पदतया मानुभूवमहं सदा।भूयासमिति यो द्रष्टा सोऽहं विष्णुर्मुनीश्वर।[१]" इत्यादि वराहश्रुतौ समाम्नायते। स किं विष्णुः सत्यकामत्वसत्यसंकल्पत्वादिगुणकः परमेश्वरः स्यात् उत कर्तृत्वभोक्तृत्वादिगुणको जीवः? आहोस्विदणीयस्त्वभारूपत्वादिगुणकः प्रत्यगात्मा? अथवा सत्यज्ञानानन्दत्वाखण्डबोधानन्दत्वादिगुणकः परमात्मेति संशयः।कुतः संशयः?चतुर्णामप्युक्तानामहंपदार्थोपपत्तेः।

किं तावत् प्राप्तम्?प्रत्यगात्मैवेति। कुतः?

जीवेश्वरयोस्तत्त्वंपदार्थवाच्यार्थत्वेन हेयगुणकतया विजिज्ञासितव्यत्वाद्यनुपपत्तेः। परमात्मनो "यतो वाचो निवर्तन्ते[२]" इत्यादिश्रुतिभ्यः अवाङ्मनसगोचरतया निदिध्यासितव्यत्वानुपपत्तेः। निदिध्यासितव्यो ह्यात्मा प्रकृतः।प्रत्यगात्मनस्तु "तत्त्वं"पदार्थलक्ष्यार्थतया उपादेयगुणकत्वात् वाङ्मनसगोचरत्वाच्च निदिध्यासितव्यत्वमुपपद्यते।

ननु प्रतीचो घटाकाशस्थानीयस्य त्वंपदलक्ष्यार्थत्वं केवलं सिद्ध्यति, नतु तत्पदलक्ष्यार्थत्वम्।नायं दोषः। व्यवहारदशापेक्षया घटाकाशस्थानीयत्वेन परिच्छिन्नस्यापि परमार्थदशापेक्षया महाकाशस्थानीयत्वेनापरिच्छिन्नस्वरूपतया उभयलक्ष्यार्थत्वसिद्धेः। तस्मात्

१.वराहोपनिषत् 2.7

२.तैत्तिरीयोपनिषत् 2.4.5

प्रत्यगात्मैव प्रकृत इति।

एवं प्राप्ते ब्रूमः—परमात्मैव प्रकृतो विष्णुरिति।कस्मात्? परप्रेमास्पदत्वात्। परं च तत् प्रेम च परप्रेम। तस्यास्पदं तस्य भावः तत्त्वं तस्मात्। "अज्ञानं (तं?)सच्चिदानन्दमखण्डं ब्रह्म सुव्रत।अहमस्मीत्यभिध्यायेद् ध्येयातीतं विमुक्तये[१]" इत्येवमादिश्रुतिभ्य आत्मनः सच्चिदानन्दाखण्डब्रह्मत्वश्रवणेनापरोक्षज्ञानविषयत्वोपपत्त्या निदिध्यासितव्यत्वोपपत्तेः। आनन्दो हि परप्रेमास्पदत्वेन प्रसिद्धः। तस्यैतस्याखण्डानन्दस्य श्रवणमनननिदिध्यासनक्रमेणानुभूयमानत्वोपपत्त्या विष्णुशब्देन महाकाशवत् सर्वव्यापकत्वोपपत्त्या च परमात्मैव प्रकृत इत्युपपद्यते।

यदुक्तम् अवाङ्मनसगोचरतयेत्यादि।तत् प्रत्युच्यते-

नह्यवाङ्मनसगोचरस्य निष्प्रतियोगिकस्य ब्रह्मण एव पुच्छशब्दनिर्दिष्टस्य परमात्मत्वं नान्यस्येति नियन्तुं शक्यते। शुद्धवाङ्मनसगोचरस्य सप्रतियोगिकस्यात्मशब्दनिर्दिष्टस्यानन्दस्यापि परमात्मत्वसंभवात्। परमात्मा हि सच्चिदानन्दरूपत्वेनारूपत्वेन च द्विविध इत्यसकृद् वक्ष्यामः। तस्मात् सम्यग् दर्शिनां प्रारब्धसदसद्भावापेक्षया स्वप्रधानयोः सप्रतियोगिकनिष्प्रतियोगिकयोः परमात्मनोः सप्रतियोगिक एव प्रतिपिपादयिषित इत्यवगन्तव्यम्।

यत् पुनरुक्तं प्रत्यगात्मन एवोभयलक्ष्यार्थत्वसिद्धेरिति, तत् प्रत्युच्यते। नेह परमार्थदशाऽपेक्ष्यते,व्यवहारदशाया एवापेक्ष्यमाणत्वात्। व्यवहारदशायां तु त्वंपदलक्ष्यार्थत्वमेव प्रतीचः सिद्ध्यति,न तु त्वंपदलक्ष्यार्थत्वम्।परिच्छेदापरिच्छेदाभ्यां प्रत्यक्परयोर्भेददर्शनात्। एवं

१.अन्नपूर्णोपनिषत् 5.74

सति प्रतीचः प्रेमास्पदत्वेऽपि परमात्मन एव परप्रेमास्पदत्वात् तस्यैव चिच्छक्तिविशिष्टत्वेन भूयासमिति द्रष्टृत्वोपपत्तेश्च निदिध्यासितव्यत्वादिकं सिद्ध्यति, प्रतीचो निदिध्यासिकृ(?त)त्वादिसिद्धेः।

यद्यपि चित्तशुद्धिनिमित्तोपासनापेक्षया प्रतीचो ध्येयत्वं स्यात्। स एव च दर्शनीयत्वेन **अथात आत्मदिदृक्षा** इति प्रथमं निर्दिष्ट इति वक्तुं शक्यम्।तथापि प्रकरणस्य सद्योमुमुक्षुविषयत्वेनोत्तमाधिकारिविषयत्वान्न तत्परतोपपद्यते। दिदृक्षानन्तरं श्रवणादीनां कण्ठरवेण द्वितीयादिसूत्रैरनुक्तत्वेऽपि सत्याद्यात्मक एष इत्यस्मादेवार्थात् सिद्धत्वात् **अथात आत्मदिदृक्षा** इत्यनेनायतनवदात्मनो निर्दिष्टत्वे शङ्क्यमाने द्वितीयसूत्रेणापरिच्छिन्ननिरायतनवस्तुनो विस्पष्टतया निर्दिश्यमानत्वात् **अथात आत्मसन्दिदृक्षा** इति सूत्रार्थोऽवगन्तुं शक्यत इत्यवादिष्म।

संदिदृक्षायां तु सत्यां निदिध्यासनचोदना फलितार्था (र्थं?) भवति।

किञ्च, "सत्यं ज्ञानमनन्तं[१]" इति श्रुत्युक्तसत्यज्ञानशब्दयोः सच्चिच्छब्दार्थाभिव्यञ्जकत्वेऽप्यनन्तशब्दस्य विनाशराहित्यार्थतया आनन्दशब्दार्थानभिव्यञ्जकत्वात् दर्शनीयस्यात्मन आनन्दराहित्यमाशङ्क्येत इत्येतदाशङ्कानिबर्हणार्थं तृतीयस्यास्य सूत्रस्य प्रवर्तितत्वात् द्वितीयतृतीयसूत्रप्रतिपाद्यमानाखण्डसच्चिदानन्दलक्षणस्यात्मन एव द्रष्टव्यत्वेनोपक्रान्तत्वादपरोक्षानुभवसिद्ध्यर्थ एव प्रथमसूत्रारम्भ इत्यवगन्तुं युक्तम्।

---

१.तैत्तिरीयोपनिषत् 2.1.1

तर्हि, एवं व्याससूत्रेऽपि किं न स्यात् ? तत्र हि जन्माद्यस्य इत्यनेन शास्त्रयोनित्वादित्यनेन चाखण्डसच्चिदानन्दब्रह्मण एव निर्दिष्टतया अथातो ब्रह्मजिज्ञासेत्यवगन्तुं शक्यत्वेनापरोक्षानुभव सिद्ध्यर्थक-निदिध्यासनचोदनाया अर्थवत्त्वादिति चेन्न-

ब्रह्मणो हि लक्षणानि द्विविधानि भवन्ति। सापेक्षानि निरपेक्षानि चेति।

तत्र सापेक्षानि जीवकारणत्वशास्त्रयोनित्वादीनि तटस्थानि। जीवशास्त्रानुवादपूर्वकत्वेन व्यतिरेकरूपाणि इतरापेक्षया वस्तूनि सिद्धानि भवन्ति। निरपेक्षाणि तु सच्चिदानन्दरूपत्वेनान्वयरूपाणी-तरानपेक्षया वस्तुनि स्वतः सिद्धानि भवन्ति।

यद्यपि सच्चिदानन्दलक्षणानामप्यनृतजडदुःखव्यावर्तकतया सापेक्षत्वं प्रसज्यते। तथापि जीवादिसापेक्षस्थूललक्षणान्यपेक्ष्य अनृतादिसापेक्ष-सूक्ष्मलक्षणानां गरीयस्त्वोपपत्त्या एतत्सूक्ष्मलक्षणवत्सच्चिदानन्दब्रह्म-स्वरूपावधारणशक्तिमदन्तःकरणस्य श्रवणमननसंस्कृतत्वोपपत्तेः **अथात आत्मदिदृक्षा** इत्युपक्रमस्य अपरोक्षज्ञानसिद्ध्यर्थकत्वं निरङ्कुशं वक्तुं शक्यम्।

"अथातो ब्रह्मजिज्ञासा[१]"इत्यत्र तु जीवादिसापेक्षस्थूललक्षण-वतब्रह्मस्वरूपावधारणशक्तिमदन्तःकरणस्य संस्कृतत्वानुपपत्तेर्मन्दा-धिकारिविषयत्वात् परोक्षज्ञानसिद्ध्यर्थक उपक्रम इति सुतरामव-गन्तुमुचितम्।

---

१.ब्रह्मसूत्रम् 1.1.1

न चैष संस्कारः विधिकाण्डप्रयुक्तनियोगजन्यो भवति। चोदनामात्रजन्यत्वात्।नाप्यत्रत्या द्रष्टव्य इत्यशेषचोदना अननुसृत्य बुद्धोऽहमित्यन्धकूप मण्डूकवदनवरतमुद्धोषयतां कदाचिदपि निष्प्रतिबन्धकापरोक्षज्ञानमुत्पद्येतेत्यवोचाम। बह्वभ्याससाध्यत्वादपरोक्षानुभूतेः। ननु सम्यग्दर्शनार्थानि श्रवणाद्युपासनानीति पूर्वमुक्तम्। इदानीं तु श्रवणजन्यज्ञानं परोक्षमित्युच्यते तस्मात् पूर्वोत्तरविरोधप्रसंग इति चेन्न, श्रवणाद्युपासनत्रयस्यैव सम्यग्दर्शनार्थकत्वात्। यस्तूपासनं श्रवणमात्रे परिसमापयति, तस्य ज्ञानं परोक्षत्वात् क्रममुक्तावेवोपयुज्यते। प्रतिबन्धनिवृत्तिस्तु ब्रह्मलोक एव भविष्यति। उज्ज्वलोऽपि ज्ञानाग्निः सप्रतिबन्धश्चेत् कर्माणि दग्धुमात्मानमपरोक्षयितुं च न शक्नुयादिति पूर्वमेव निरूपितत्वाच्च।

ननु निदिध्यासनचोदनाया अर्थवत्त्वसिद्ध्यै आत्मसंदिदृक्षेति सूत्रस्यान्यथात्वकल्पने द्रष्टव्य इति प्रथमचोदनाया वैयर्थ्यप्रसंगादायतनवदात्मविषयत्वेनैव सूत्रारम्भ इति वक्तव्यम्। तस्यापि सत्यज्ञानानन्तपरप्रेमास्पदत्वाद्युपपत्तेः।अन्यथा आत्मनः सच्चिदानन्दत्वाद्यभावे दिदृक्षोर्मन्दस्यापि दर्शनप्रवृत्त्यसंभवेन मोक्षाभावप्रसंगादिति चेद्, उच्यते-

"अहमेव सुखं नान्यद्[१]" इत्यादिना स्वपदार्थानतिरिक्तस्यैव परप्रेमास्पदताया उक्तपूर्वत्वान्निरायतनात्मदर्शनविषयत्वेनैव सूत्रारम्भ इति युक्तम्।आयतवदात्मनस्तु खण्डस्वरूपत्वेनद्रष्टुस्तादात्म्यासंभवात्।

---

१.वराहोपनिषत् 2.7

स्वातिरिक्तसच्चिदानन्दरूपदर्शनिनापरोक्षब्रह्मवित्त्वासंभवाच्च तादृशपरिच्छिन्नात्मोपासनस्य क्रममुक्त्यर्थकतायाः प्रदर्शितपूर्वत्वाच्च न तादृशोपासनमत्र ब्रह्मात्मैक्यानुभूतिसाधनप्रतिपादनप्रकरणे सुतरामुपयुज्यते।

न चैतेन क्रममुक्त्युपयुक्तभेदोपासनचिकीर्षोर्दर्शनप्रवृत्त्यसंभवो भवितुमर्हति। कुतः? "अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा[१]"त्मेत्याद्यासु परिच्छिन्नात्मप्रतिपादनपरासु श्रुतिषूपासकस्यात्यन्तविश्वासवत्तया तदात्मनि सत्यबुद्धिसंभवात्। प्रकाशस्य स्वयं भिन्नतया वा दृष्टत्वेन ज्ञानबुद्धिसंभवाच्च श्रुतिविश्वासेनैवानन्तमतिश्च संभवति। परप्रेमास्पदत्वाभावेऽप्येकदेशानन्दविष्फूर्तिसंभवेन प्रेमास्पदत्वं चोपपद्यत इत्यवादिष्म।तस्मात् प्रथमचोदनायाः सार्थक्यं भवत्येव। तथापि तादृशभेदोपासनस्य प्रकृतात्मैक्यानुभूत्यनुपयोगाद् "अथात आत्मदिदृक्षा[२]"इत्यस्य सूत्रस्य "अथात आत्मसंदिदृक्षा" इति व्याख्यानं युक्तमेव।

तथा च क्रममुक्त्यर्थकं परिच्छिन्नब्रह्मध्यानं सद्योमुक्त्यर्थकमपरिच्छिन्नब्रह्मध्यानं च भेदेन निर्दिश्येते दर्शनोपनिषदि(=जाबालदर्शनोपनिषदि?)-" अथातः संप्रवक्ष्यामि ध्यानं संसारनाशनम्।ऋतं सत्यं परं ब्रह्म सर्वसंसारभेषजम्।ऊर्ध्वरूपं(रेतं ?) विरूपाक्षं विश्वरूपं महेश्वरम्।सोऽहमित्यादरेणैव ध्यायेद् योगीश्वरेश्वरम्[३]"-इति; "अथवा सत्यमीशानं ज्ञानमानन्दमद्वयम्।अत्यर्थमचलं नित्यमादिमध्यान्त-

१.कठोपनिषत् 6.17; श्वेताश्वतरोपनिषत् 3.13

२.अनुभूतिमीमांसासूत्रम् 1.1.1

३.जाबालदर्शनोपनिषत् 9.2

वर्जितम् ।तथा स्थूलमनाकाशमसंस्पृश्यमचक्षुषम् ।न रसं नवगन्धाख्यमप्रमेयमनूपमम् ।आत्मानं सच्चिदानन्दम्[१]-"इत्यादि च।

अत्र, "अथातः संप्रवक्ष्यामि"इत्यारभ्य "ध्यायेद् योगीश्वरेश्वरम्" इत्यन्तं परिच्छिन्नब्रह्मध्यानं विवक्ष्यते ।अथवा सत्यमीशानमित्यारभ्यापरिच्छिन्नब्रह्मध्यानं विवक्ष्यते। कुतः?

ऋतं वागगोचरं मनोगोचरमूर्ध्वरूपत्वादिलक्षणं च परब्रह्म ध्यायेदित्युक्तत्वात् ।पश्चात् सत्यज्ञानानन्दत्वादिलक्षणमात्मानमभिध्यायेदित्युक्तत्वाच्च ।ध्यानशब्दाभिध्यानशब्दयोर्हि पूर्वोक्तप्रकारेणार्थभेदः प्रसिद्धः।

यद्युच्येत सोऽहमित्यादरेणैवेत्यनेनाभेदध्यानस्योक्तत्वात् पूर्वापरध्यानद्वयविधाने सत्यपि नार्थभेदो भवितुमर्हतीति।

तन्न,पूर्वत्र सोऽहमिति ध्यायेदित्येवोक्तं, न तु तद्ध्यानफलमुक्तम् ।अपरत्र तु वेदान्तविज्ञानोत्पत्तिफलमुच्यते ।तस्मात् सोऽहमित्यभेदेन ध्यानमपि आयतनवद् ब्रह्मतद्भेदोपासनविषय एव। कुतः?अपरत्रोक्तप्रकारकाभिध्यानं विना कल्पशतावर्तितेनापि पूर्वत्रोक्तप्रकारकध्यानेनोपासकस्य तादात्म्यासंभवात् सद्योमुमुक्षुभिरभिध्यानमेव कर्तव्यं नतु ध्यानं क्रममुमुक्षुभिः कर्तव्यत्वाद् ध्यानस्य।

ननु ध्यानं नाम मानसी क्रिया । तत् कर्तुमकर्तुमन्यथा कर्तुं शक्यत्वाद् ध्यानद्वयमपि हेयमेव पुरुषतन्त्रत्वेन कल्पनारूपत्वात्। ध्याता हि पुरुष आयतने निरायतने वा स्वबुद्ध्या ब्रह्म कल्पयति। यथा सालग्रामादौ विष्ण्वादि तद्वत्। परोक्षमपरोक्षं वा ज्ञानं तूपादेयं

१.जावालदर्शनोपनिषत् 9.3

भवितुमर्हति। कुतः? वस्तुतन्त्रत्वेन परमार्थरूपत्वात्। ज्ञाता हि पुरुषो लोके आयतनवन्निरायतनवदुभयातीतं वा ब्रह्म जानाति। यथाग्न्यादावुष्णादिं तद्वदित्यत्रोच्यते-

न च ध्यानद्वयमपि कल्पनारूपमिति वक्तुं युक्तम्।अननुष्ठान-विषयतया पुरुषतन्त्रत्वाभावेन क्रियारूपेत्वाभावात्।या तु कायिक-वाचिकानुष्ठानरूपा क्रिया तस्या एव हेयत्वोपपत्तेः।नहि ध्याता पुरुष आयतने निरायतने वा स्वबुद्ध्या ब्रह्म कल्पयन् संकल्पयन् वाऽपि दर्शनसंदर्शनासंपन्नो भवतीति वाच्यम्।परिच्छिन्नत्वेनापरिच्छिनत्वेन च वस्तुनो निसर्गसिद्धत्वेन सालग्रामादाविव बुद्धिविकल्पितत्वानुपपत्तेः। यथाभूतवस्तुविषयत्वाद् ध्यानयोरग्न्युष्णदृष्टान्ताविरोधाद् दर्शनसंदर्शनयोः क्रमसद्योमुक्तिसाधनीभूतयोरवश्यभावाच्च।

नहि यथाभूतवस्तुविषयं ध्यानद्वयं मानसी क्रियेति वक्तुं शक्यम्।नच ध्यानयोर्मानसत्वेऽपि कर्तुमकर्तुमन्यथा वा कर्तुं शक्यता स्यात्। प्रतीकादाविव सविकल्पं कर्तुमशक्यत्वात्।ममुक्षुभिरकर्तु-मशक्यत्वाच्च। तथा हि प्रतीकादौ करचरणाद्यवयवविशिष्टा मूर्तिर्बुद्ध्या विकल्प्येत। नैवमत्र विकल्पः संभवति। भूतवस्तुविषयत्वाद् ध्यानस्य। विकल्पानपेक्षं संकल्पसंततिमात्रेण परञ्ज्योतिःस्फूर्तिसंभवात् कर्तुं शक्यमिति न वाच्यम्।यथाभूतवस्तुध्यानकरणे मुमुक्षोः प्रतिबन्ध-निवृत्त्यसंभवेनावश्यकर्तव्यत्वादकर्तुं शक्यमिति न वाच्यं, साळग्रामादा-विवान्यथाध्यानकरणासंभवादन्यथाकर्तुं शक्यमिति च न वाच्यम्।तथा हि- सालग्रामे कश्चित् मत्स्यं ध्यायति, कश्चिद् वराहम्, अन्यः कृष्णमन्यश्च विष्णुम्।नैवमत्रान्यथा ध्यातुं शक्यम्। यथाभूतवस्तु-

विषयत्वेनान्यथाऽनुपपत्तेः।तस्माद् ध्यानद्वयमपि क्रमसद्योमुमुक्षुभ्यामवश्योपादेयमित्यवगन्तव्यम्।

यदुक्तं परोक्षमपरोक्षं वा ज्ञानमुपादेयमित्यादि।तत्रोच्यते।

नहि ज्ञानविज्ञानयोश्च मानसत्वं निवार्यं स्यात्। कुतः ? मनसोऽभावे श्रवणाद्यसंभवात्। शुश्रूषुर्हि मनोऽनुविद्धेन श्रोत्रेण गुरूपदिश्यमानं वाक्यार्थं श्रुणोति।तथा च ध्यानाभिध्यानयोरिव कर्तुमकर्तुमन्यथा वा कर्तुमशक्यत्वं समानमेव।

तस्माद् ध्यानाभिध्यानजन्यदर्शनसंदर्शनयोः श्रवणनिदिध्यासनजन्यज्ञानसम्यग्ज्ञानयोश्च क्रममुक्तिसद्योमुक्तिफलत्वाविशेषान्न फलवैषम्यं मन्तव्यम्।

ननु-" सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि। संपश्यन् ब्रह्म परमं याति नान्येन हेतुना।आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम्। ध्याननिर्मथनाभ्यासात् पाशं दहति पण्डित[१]-" इति कैवल्यश्रुत्यनुरोधेन यस्यान्वयव्यतिरेकाभ्यां केवलमभ्यासं विनाऽऽत्मज्ञानं नोत्पद्यते तस्य मन्दाधिकारिण आत्मानमरणिं कृत्वेत्युक्तध्याननिर्मथनाभ्यासविधानदर्शनात्। ध्यानाभ्यासनैरपेक्ष्येणोत्पद्यमानज्ञानप्राधान्येनैव सर्वाणि च वेदान्तवाक्यानि प्रवृत्तान्यभ्युपगन्तव्यानि। न त्वभ्याससापेक्षवाक्यानि।प्रकरणस्योक्तमाधिकारिकविषयत्वप्रतिज्ञोपरोधप्रसंगाच्च।अतो ब्रूमः। न ह्यनयोः सूत्रभाष्ययोर्मन्दाधिकारिविषयत्वं, परोक्षज्ञानविषयत्वं वा केनचिदपि वक्तुं शक्यं, परमरहस्यार्थस्य प्रतिपिपादयिषितत्वात्। ध्यानाभ्यासप्रतिष्ठापनार्थं प्रवृत्तत्वाच्च। नहि

१.कैवल्योपनिषत् 10

ध्यानाभ्यासैकनिष्ठः पुरुषो मन्दाधिकारीति वाच्यम्, अभ्यासं विनोत्पन्न-ज्ञानस्यापि विदुषो दृढतरपूर्वाभ्यासनिष्ठत्वेनाभ्यासस्यैव प्राधान्या-वगमात् ।सर्वभूतस्थमात्मानमित्यत्रोक्तविदुषो निर्मथनाभ्यासाभावे-ऽप्यन्वयव्यतिरेकानुसंधानात्मकसकृदभ्यासवत्त्वेन ज्ञानोत्पत्तेरभ्यासैक-प्राधान्याच्चोक्तमाधिकारिविषयकध्यानाभ्याससापेक्षवाक्यान्वय-प्राधान्येनाभ्युपगन्तव्यानि, नत्वभ्यासनिरपेक्षज्ञानप्रधानवचनानि ।कुतः? ज्ञाननिर्मथनात्मकनिदिध्यासनं विनोत्पन्नस्य सप्रतिबन्धस्य श्रवणजन्य-ज्ञानस्यापरोक्षत्वाभावेन मन्दाधिकारिविषयत्वात् ।

ननु-" विविक्तदेशे च सुखासनस्थः शुचिः समग्रीवशिरः-शरीरः ।अत्याश्रमस्थः सकलेन्द्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य । हृत्पुण्डरीकं विरजं विशुद्धं विचिन्त्य मध्ये विरजं विशोकम् ।अचिन्त्य-मव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम् । तदादिमध्यान्त-विहीनमेकं विभुञ्चिदानन्दमरूपमद्भुतम् । उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् ।ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् ।स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् । स एव विष्णुः स प्राणः स कालोऽग्निः स चन्द्रमाः ।स एव सर्वं यद् भूतं यच्च भव्यं सनातनम् ।ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तय[१] " इति श्रूयते ।

किमेतदुपासनं कर्मसमृद्ध्यर्थमुत चित्तशुद्ध्यर्थमथवा सद्यो-मुक्त्यर्थम्?

नाद्यः, प्रतीकादिविषयत्वाभावात् ।

१.कैवल्योपनिषत् 5

न द्वितीयः, सगुणमूर्तिपरत्वाभावात्। उमासहायमित्यादिना सगुणपरत्वमिति चेन्न, पूर्वोत्तरविरोधप्रसंगात्।

पूर्वं हि विशदं विशोकमित्यादि विभुं चिदानन्दमरूपमद्भुत-मित्यन्तमुक्तलक्षणस्य शिवस्यादिमध्यान्तविहीनत्वाद्यवगमेन प्रत्यगभिन्न-निर्गुणपरब्रह्मपरत्वं स्पष्टमवगम्यते। उत्तरत्र तु गच्छति भूतयोनिं समस्तसाक्षिमित्यनेन निर्गुणब्रह्मत्वमेवावगम्यते।

एवमुपक्रमोपसंहारयोर्निर्गुणपरत्वे सति कथं मध्ये सगुणपरत्वं स्यात्? न चोमासहायत्वप्रभुत्वत्रिलोचनत्वनीलकण्ठत्वप्रशान्तत्वादीनां भवानीसहायत्वविष्ण्वादिनियन्तृत्वसमर्थत्वसोमसूर्याग्निनेत्रत्वकृष्ण-कण्ठत्वप्रसन्नवदनेन्द्रियादिमत्त्वादयोऽर्था मन्तव्याः। ब्रह्मविद्यासहायत्व-सर्वकारणत्वसर्वशक्तिमत्त्वविश्वतैजसप्राज्ञाख्यजीवत्रयहिरण्यगर्भ-सूत्रान्तर्याम्याख्येशत्रयप्रकाशकत्वचिदेकदेशावस्थिताज्ञानवत्त्वपुन-रुत्थानसंस्कारवर्जितत्वादीनामर्थानां मन्तव्यत्वात्। ध्यात्वेत्यस्य तु मनननिदिध्यासने कृत्वेत्यत उपक्रमोपसंहारमध्येषु निर्गुणपरत्वस्यैवा-वगम्यमानत्वाच्चित्तशुद्ध्यर्थमिति वक्तुमयुक्तम्।यद्वा भवानी-सहायत्वाद्युपलक्षितमिति वक्तव्यम्।

नापि तृतीयः-विभुं चिदानन्दमित्यादिनाऽऽयतनपरिच्छिन्न-त्वावगमात्। क्रममुक्त्यर्थकमुपासनं हि भ्रूसन्ध्यक्षिहृदयाद्या-यतनपरिच्छिन्ननिर्गुणब्रह्मविषयत्वेन सर्ववेदान्तेषु श्रूयते।तस्मात् कैवल्यश्रुत्युक्तोपासनं सद्योमुक्त्यर्थमेव।तर्हि "तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः[१]।" "आत्मानं चेद् विजानीयाद् अयमस्मीति

१.बृहदारण्यकोपनिषत् 4.4.21

पूरुष[१]" इत्येवमादिश्रुतिभ्यो विज्ञाय, विजानीयादित्यात्माव-गतिर्विज्ञानशब्देन व्यपदिश्यते।अन्यत्र विज्ञातारमरे केन विजानीया-दिति विज्ञातुरपि विज्ञातृ न किञ्चिदस्तीत्यवगम्यते।

तत् कथमिति चेदुच्यते-"वेदान्तज्ञानविज्ञानसम्यग्ज्ञानादिना मुनिः।तद्विष्णोः पदमक्षोभ्यं याति चिन्मात्रमेव हि[२]-"इति श्रुत्यनुरोधेन वेदान्तज्ञानविज्ञानसम्यग्ज्ञानैर्विष्णुपदस्य परमस्य गन्तव्यत्वावगमात्। ज्ञानविज्ञानसम्यग्ज्ञानानि श्रवणमननिदिध्यासनजन्यानीत्यतो विज्ञातारं निनदिध्यासनजन्यसम्यग्ज्ञानेन विना केन विजानीयान्न कोऽपीत्यर्थः।

यद्यपि वेदान्तेषु ज्ञानविज्ञानपरिपूर्णज्ञानैकात्म्यज्ञानानि सर्वत्र सामान्येनैव प्रयुज्यन्ते तथापि तत्तत्संदर्भानुसारेण विभज्य व्याख्यातव्याद् दर्शनसुदर्शनसम्यग्दर्शनानां च ध्यानानुध्यानाभिध्यानजन्यत्वेऽपि ज्ञानादीनां दर्शनादीनामैकार्थ्यत्वं युक्तम्।

ननु निदिध्यासितव्यस्यात्मनः परप्रेमास्पदत्वमुक्तम्। तन्नोप-पद्यते।कुतः? प्रेमार्थकस्य प्रियार्थकत्वात् "तस्य प्रियमेव शिरो मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्ष आनन्द आत्मा ब्रह्म पुच्छं प्रतिष्ठा[३]"इति श्रुत्युक्तशिरस्स्थानीयस्य प्रियस्य दक्षिणोत्तरपक्ष्म-स्थानीयमोदप्रमोदानन्दानां च पुच्छब्रह्मातिरिक्ततया हेयत्वस्य पूर्वकैः प्रतिपादितत्वाद् हेयोपादेयशून्यं पुच्छब्रह्मावगतेरेव मोक्षहेतुत्वस्य प्रतिपादितत्वाच्च परप्रेमास्पदत्वे त्वात्मनो विज्ञेयत्वानुपपत्तिप्रसंगात्

१.बृहदारण्यकोपनिषत् 4.4.12

२.(?)

३.तैत्तिरीयोपनिषत् 2.5

सत्यज्ञानानन्तलक्षणस्य चात्मनः परप्रेमास्पदत्वमनुपपन्नमित्येवं प्राप्ते ऽभिधीयते-

**प्रमाणानुसारात्।**

प्रमाणानि ह्येतस्मिन् परप्रेमास्पदत्वार्थानुसृतानि भवन्ति। कानि प्रमाणानि? श्रुतियुक्त्यनुभवात्मकानि।का वा श्रुतयः? "आत्मनस्तु कामाय पतिः प्रियो भवति। न पत्युः कामाय पतिः प्रियो भवत्या-त्मनस्तु कामाय सर्वं प्रियं भवति न सर्वस्य कामाय सर्वं प्रियं भवति[१]-" "अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्।आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततोऽद्वयम्।उपेक्ष्य नामरूपे द्वे सच्चिदानन्दतत्पर[२]" इत्याद्याः।"अहमेव सुखं नान्यत्[३]"इति पूर्वोक्ताश्च श्रुतय आत्मनः परप्रेमास्पदत्वं द्रढयन्ति ।

का वा युक्तयः? कार्यप्रपञ्चानुमानेन कारणस्य सत्त्वं सूर्यादि-पञ्चज्योतिरवभासकत्वानुमानेन कारणस्य चित्त्वम्,इष्टानिष्टप्रवृत्ति-निवृत्तिदर्शनानुमानेन कारणस्यानन्दत्वमित्येवमाद्या आत्मनः सच्चिदानन्दत्वं दर्शयन्ति।

का वाऽनुभूतयः?" विक्षेपो वा समाधिर्वा मनसः स्याद् विकारिणः।नित्यानुभवरूपस्य को मेऽस्यानुभवः पृथक्।धन्योऽहं धन्योऽहं तृप्तेर्मे कोपमा भवेल्लोके? धन्योऽहं धन्योऽहं स्वस्याज्ञानं पलायितं क्वापि।अहो ज्ञानमहो ज्ञानमहो सुखमहो सुखम्।अहो पुण्यमहो

---

१.बृहदारण्यकोपनिषत् 2.4.5

२.सरस्वतीरहस्योपनिषत् 23-24

३.वराहोपनिषत् 2.7

पुण्यमहो गुरुरहो गुरुः।ऐहिकामुष्मिकव्रातसिद्ध्यै मुक्त्यै च सिद्धये।यद् यत् कृतं मया पूर्वं तत् सर्वमधुना कृतम्।[१]"-इत्येवमाद्या दत्तात्रेयादि-विद्वदनुभूतयः।

तस्मादेवं प्रमाणत्रयानुसारेण प्रसिद्धमात्मनः सच्चिदानन्दत्व-मपह्नोतुं कः शक्नुयात्?

यदुक्तं तस्य प्रियमेव शिर इति श्रुत्युक्तप्रियमोदप्रमोदानन्दानां हेयत्वं प्रतिपादितमित्यादि,तत्रोच्यते। नहि प्रियादीनां हेयत्वं वक्तुं युक्तम्।कुतः? ब्रह्मविदादिचतुर्विधजीवन्मुक्तानुभवविषयत्वात् ब्रह्मविदनुभूत्या ब्रह्म प्रियं भवति।ब्रह्मविद्वरानुभूत्या ब्रह्ममोदो भवति। ब्रह्मविद्वरीयोऽनुभूत्या ब्रह्मप्रमोदो भवति।ब्रह्मविद्वरिष्ठानुभूत्या ब्रह्मानन्दो भवति।"आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन[२]"इति श्रुतेर्ब्रह्मा-नन्दविदुषोपरिष्ठस्य कुतश्चन भीत्यभ्युपगमात् इतरेषां भयतारतम्योप-पत्तेः।

या तु प्रतिष्ठा ब्रह्मपुच्छत्वेन निर्दिश्यते सा चतुर्विध-जीवन्मुक्तातीतनिष्प्रतियोगिकसत्तासामान्यस्वरूपिणी "यतो वाच[३]" इति श्रुत्युक्ता।"न निरोधो न चोत्पत्तिः[४]" इत्यादि च श्रुत्युक्ता चावाङ्मनसगोचरा बन्धमोक्षातीता स्थितिरित्यतो न प्रेमशब्दस्य प्रियार्थकत्वे विरोधोऽस्ति।प्रियादीनां पूर्वकैर्हेयत्वं प्रतिपादनं तु

१.अवधूतोपनिषत् 21

२.तैत्तिरीयोपनिषत् 2.4

३.तैत्तिरीयोपनिषत् 2.4.5

४.माण्डूक्यकारिका 2.32

पञ्चकोशविचारप्रवृत्तजिज्ञासुविषयत्वेन मन्दाधिकारिविषयतयोपयुक्तत्वादवगन्तव्यम् ।यस्तु पञ्चकोशविचारावशिष्टब्रह्मात्मैक्याभिध्यानप्रवाहेनात्मानं सम्यग्जानाति तादृशसम्यग्ज्ञान्याख्यब्रह्मविद्विषयत्वेनोक्तमाधिकारिविषयतया प्रियसंसूचितस्यात्मनो हेयत्वानुपपत्तेस्तथा सम्यग्दर्शनानन्तरनिर्विकल्पादिसमाध्यभ्यासैरवगतत्रिविधात्मवरवरीयोवरिष्ठविषयत्वेन मोदप्रमोदानन्दसंसूचितात्मनां च हेयत्वानुपपत्तेः ।प्रियप्रेमानन्दशब्दनिर्दिष्टात्मनो विज्ञेयत्वोपपत्तेश्च परप्रेमास्पदत्वमुपपद्यत इति सुष्ठूक्तम् ।

नन्वानन्दमयोऽभ्यासादित्यत्र भगवत्पादैरानन्दमयस्यात्मनो मयट्प्रवाहपठितत्वविकारित्व-दुःखप्रतियोगिकत्व-प्रचुरानन्दत्वादिहेतुभिरब्रह्मत्वं प्रतिपाद्य सूत्रमप्यन्यथा कृतम् । ब्रह्म पुच्छमभ्यासादि तात्पर्यात् । तत्रैवं सति कथमत्रान्दमयस्य पञ्चमकोशाधिष्ठितस्य सुषुप्तस्याज्ञानावरणद्वयोपहितस्य ब्रह्मत्वं विज्ञेयत्वं चोच्येते । नहि तैत्तिरीयश्रुत्यनुरोधेन विरचितस्यानन्दमयाधिकरणभाष्यस्यार्थं प्रत्याख्यातुं केनचिदपि शक्यम् । नच तत्र प्रियमेव शिर इत्यत्र शिरस्त्वेन प्रथमोक्तस्य प्रियस्यान्नमयकोशविषयतया प्रत्याख्यातस्य पुनर्ग्रहणमुचितं स्यात् ।न हि सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति ।"अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत[१] "इति श्रुतेर्जीवन्मुक्तस्य च प्रियाप्रियसंस्पर्शराहित्यमुच्यते । तस्मादन्नमयकोशविषयकप्रियातिरिक्तप्रियस्वरूपम् आनन्दमयकोशविषयकानन्दातिरिक्तानन्दस्वरूपं च ब्रह्मैकमेव विज्ञेयमिति युक्तमित्येवं प्राप्ते -

१.छान्दोग्योपनिषत् 8.12.1

ब्रूमः-

नहि व्याससूत्रस्य परोक्षज्ञानोपयुक्ततां कदापि वारयामः। जिज्ञासुभिः प्रथमं बालपाठानुरोधेनाभ्यसनीयत्वात्।

पश्चात्तु विजिज्ञासुभिः सद्योमुक्तिनिमित्तापरोक्षज्ञानसिद्ध्यै एतत्सूत्रभाष्याभ्यासः कर्तव्यः। कुतः?अपरोक्षानुभवप्रतिपादकाष्टोत्तरशतोपनिषत्प्राधान्येनैतत्सूत्रभाष्ययोः प्रवर्त्यमानत्वात्।

दशोपनिषत्प्राधान्येन प्रवर्तितव्याससूत्रादिवेदान्तानामत्र समन्वितार्थत्वेन चारितार्थ्यादाभ्यामेव परोक्षज्ञानादिसर्वसिद्धेरेत एव सूत्रभाष्ये मुमुक्षुभिः प्रथममम्यभ्यासयोग्य इति वा युज्यते। एवमष्टोत्तरशतोपनिषदर्थाविरोधेन दशोपनिषदादीनामर्थसमन्वयाकरणे मुमुक्षूणां निदिध्यासनाद्यभ्यासप्रवृत्त्यभावः प्रतिबन्धनिवृत्त्यभावश्च प्रसज्येयाताम्। अद्वैतात्मवादमात्रेण पर्यवसन्नानि च सर्वाणि शास्त्राणि विरुद्धार्थानि प्रतिभासेरन्।

तेन सर्वप्रतिबन्धनिवृत्तिसाधनप्रवचनतत्पराष्टोत्तरशतमुपेक्ष्य श्रुत्येकदेशाश्रयणेन स्वस्यानर्थव्राताकरस्यापि बन्धमुक्त्यतीतनिष्प्रतियोगिकसत्तासमान्यात्मकत्वं सच्चिदानन्दमात्रत्वं वा मत्वा यथेच्छाचारसंभवादेतादृशलोकानर्थनिवृत्तिक्षेमहेतोरष्टोत्तरशतोक्तं चतुर्मात्रं षोडशमात्रं चतुष्षष्टिमात्रमष्टाविंशत्युत्तरशतमात्रं च ब्रह्मप्रणवमाश्रित्य प्रपञ्चयिष्यमाणार्थानुरोधेन दशोपनिषद्व्याससूत्रादीनां व्याख्यातव्यार्थात्वात्। न चान्नमयकोशविषयतया प्रत्याख्यातं प्रियं प्राणमयमनोमयविज्ञानमयानन्दमयकोशविषयतया प्रत्याख्याता मोदादयश्चेह पुनर्गृह्यन्ते। ब्रह्मविद्वर-वरीयो-वरिष्ठविषयकप्रियादीनामेव पुनर्गृह्यमाणत्वात्।

## ७५.शाङ्करभाष्यासामञ्जस्याधिकरणम्।

**पराभिध्यानाद्देहयोगाच्चेत्यत्रासामञ्जस्यात्।**

अत्र केचिदाहुः-कथं शङ्करभगवत्पादप्रणीतेषु भाष्येषु दोषो भवेत्? यद्यप्यतीतैर्ग्रन्थसंदर्भैस्तत्रत्यदोषस्तत्र तत्र प्रदर्शितः। तथाऽपि तद्दोषस्य तद्भाष्यवाक्यानुवादपुरस्सरं प्रदर्शितत्वाभावान्नाभ्युपगन्तव्यत्वमस्तीति। अत एकविज्ञानन्यायेन सर्वस्य च तद्विरचितप्रस्थानत्रयभाष्यादि-प्रबन्धजातस्य बहुदोषयुक्तत्वं प्रदर्शयितुमिदमधिकरणमारभ्यते।

भगवान् बादरायणाचार्यः "सन्ध्ये सृष्टिराह हि[१]" इत्युपक्रम्य "देहयोगाद् वा सोऽपि[२]" इत्यन्तं स्वप्नावस्थोपन्यासपरेषु तृतीयाध्याय-द्वितीयपादसूत्रेषु सूत्रद्वयमाह। "पराभिध्यानात् तिरोहितं ततो ह्यस्य बन्धविपर्ययौ[३]", "देहयोगाद्वा सोऽपि[४]"इति। तस्य सूत्रद्वयस्य शङ्कराचार्योऽर्थमाह–

कथमिति? उच्यते-अथापि स्यात् परस्यैव त्वात्मनोंऽशो जीवोऽग्नेरिव विष्फुलिङ्गः। तत्रैवं सति यथाऽग्निविष्फुलिङ्गयोः समाने दहनप्रकाशशक्ती भवतः ,एवं जीवेश्वरयोरपि ज्ञानैश्वर्यशक्ती। ततश्च जीवस्यैश्वर्यवशात् सांकल्पिकी स्वप्ने रथादिसृष्टिः भविष्यति इति।

अत्रोच्यते। सत्यपि जीवेशयोरंशाशिभावे प्रत्यक्षमस्य जीवस्ये-

---

१.ब्रह्मसूत्रम् 3.2.1

२.ब्रह्मसूत्रम् 3.2.6

३.ब्रह्मसूत्रम् 3.2.5

४.ब्रह्मसूत्रम् 3.2.6

श्वरधर्मविपरीतधर्मत्वम्। किंपुनर्जीवस्येश्वरसमानधर्मत्वं नास्त्येव। न नास्ति। विद्यमानमपि तत्तिरोहितमविद्यादिव्यवधानात्। तत् पुनस्तिरोहितं सत् परमेश्वरमभिध्यायतो यतमानस्य जन्तोर्विधूम-ध्वान्तस्य तिमिरतिरस्कृतेव दृक्तत्तिरौषधवीर्यादीश्वरप्रसादात् संसिद्धस्य कस्यचिदेव दृक्शक्तिरौषधवीर्यादीश्वरप्रसादात् संसिद्धस्य कस्यचिदेवा-विर्भवति। न स्वभावत एव सर्वेषां जन्मनाम्। कुतः? ततो हीश्वराद्धेतोरस्य जीवस्य बन्धमोक्षौ भवतः। ईश्वरस्वरूपापरिज्ञानात् बन्धः। तत्स्वरूपपरिज्ञानात्तु मोक्षः।

तथा च श्रुतिः- "ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः ।स्वाभिध्यानाद् हृदयं देहभेदे विश्वैश्वर्यं केवल आप्तकामः[१]" इत्याद्येति।

अथ चापरस्य "देहयोगाद् वा सोऽपि[२] "इत्यस्य सूत्रस्यार्थ-माहकस्मात् पुनर्जीवः परमात्मांश एव सन् तिरोहितज्ञानैश्वर्यो भवति? युक्तं तु ज्ञानैश्वर्ययोरतिरस्कृतत्वं विष्फुलिंगस्येव दहनप्रकाशयोः इति। अत्रोच्यते।सत्यमेवमेतत्। सोऽपि जीवस्य ज्ञानैश्वर्यतिरोभावो देहयोगात् देहेन्द्रियमनोबुद्धिविषयवेदनादियोगाद् भवति।अस्ति चात्रोपमा। यथाग्नेर्दहनप्रकाशनसंपन्नस्याप्यरणिगतस्य दहनप्रकाशनतिरोभावः यथा वा भस्मच्छन्नस्य। एवमविद्याप्रत्युपस्थापितनामरूपकृतदेहाद्युपाधि-योगात् तदविवेककृतो जीवस्य ज्ञानैश्वर्यतिरोभावः। वाशब्दो जीवेश्वरयो-रन्यत्वशङ्काव्यावृत्त्यर्थः।

---

१.श्वेताश्वतरोपनिषत् 1.11

२.ब्रह्मसूत्रम् 3.2.6

नन्वन्य एव जीव ईश्वरादस्तु तिरस्कृतज्ञानैश्वर्यत्वात्। किं देहयोगकल्पनया?

नेत्युच्यते। नह्यन्यत्वं जीवस्येश्वरादुपपद्यते। "सेयं देवता[1]" इत्युपक्रम्य "अनेन जीवेनात्मनानुप्रविश्य" इत्यात्मशब्देन जीवस्य परामर्शदर्शनात्। "तत् सत्यं स आत्मा तत्त्वमसि श्वेतकेतो[2]" इति च जीवायोपदिशतीश्वरात्मत्वम्। ततोऽनन्य एवेश्वराज्जीवः। स देहयोगात्तिरोहितज्ञानैश्वर्यो भवति। अतश्च न सांकल्पिकी जीवस्य स्वप्ने रथादिसृष्टिर्घटते। यदि च सांकल्पिकी स्वप्ने सृष्टिः स्यात्, नैवानिष्टं किञ्चित् स्वप्ने पश्येत्। नहि कश्चिदनिष्टं संकल्पयते।

यत् पुनरुक्तं जागरितदेशश्रुतिः स्वप्नस्य सत्यत्वं ख्यापयति इति; नैतत् साम्यवचनं सत्यत्वाभिप्रायं स्वयंज्योतिष्ट्वविरोधात्। श्रुत्यैव च स्वप्ने रथाद्यभावस्य दर्शितत्वात्। जागरितप्रभववासनानिमित्तत्वात्तु स्वप्नस्य तुल्यनिर्भासत्वाभिप्रायम्। तस्मादुपपन्नं स्वप्नस्य मायामात्रत्वम् -इति।

अत्रैवं शङ्कराचार्योपन्यस्तार्थेषु संशयः। किमिमेऽर्थाः प्रकृतसूत्रद्वयानुसारिणः स्युः, आहोस्विदननुसारिण इति।

किं तावत् प्राप्तम्? अनुसारिण इति। कुतः? सामञ्जस्यात्। सूत्रद्वयस्य च समञ्जसा एव ह्यर्था अभिहिता दृश्यन्ते। तत्र कथमननुसारिण इति वक्तुं शक्यम्। तस्मात् सूत्रानुसारिण एव भाष्यार्था इत्येवं प्राप्ते-

१.छान्दोग्योपनिषत् 6.3

२.छान्दोग्योपनिषत् 6.8.7

ब्रूमः—उक्तार्थाः सूत्राननुसारिण एव स्युरिति।कस्मात्? असामञ्जस्यात्।सूत्रद्वयस्य चासमञ्जसा एव ह्यर्था अभिहिता दृश्यन्ते। तत्र कथमनुसारिण इति वक्तुं शक्यम्?तस्मात् सूत्राननुसारिण एव भाष्यार्थाः।किं नामासामञ्जस्यम्?

**अविद्यमानयोरभ्युपगमादसंभवाच्च।**

यतः प्राक् तत्त्वमसिवाक्यार्थश्रवणादेरविद्यमानयोर्जीवस्य ज्ञानैश्वर्ययोर्विद्यमानत्वमभ्युपगम्यते।विद्यमानमपि तत्तिरोहित-मित्यादिना।तस्मादसामञ्जस्यमुपपन्नम्।यदि जीवस्य प्रागीश्वरसमान-धर्मत्वं स्यात् ततो न तस्य नित्यमुक्तस्वभावस्य प्रागीश्वरभावमापन्नस्य ज्ञानैश्वर्यतिरोभाव उपपद्यते,निमित्ताभावात्।

अविद्यादिव्यवधानं तु जीवस्यैव प्रसिद्धं नेश्वरस्य-"समस्तसाक्षिं तमसः परस्तात्[१]" इत्यादिश्रुतिभ्यः दूरीकृताविद्यान्धकारत्वावगमात्। नचेमौ बन्धमोक्षौ ईश्वरस्येति श्रूयते,जीवस्येत्येव सर्वत्र प्रसिद्धत्वात्। नच सर्वज्ञानैश्वर्यसंपन्नोभयलिङ्गश्रुतिगम्येश्वरस्वरूपापरिज्ञानाद् बन्धस्तत्स्वरूपपरिज्ञानान्मोक्षश्चेति वाच्यम्,असंभवात्। असंभवं ह्युभयलिङ्गत्वाविधारणमित्युक्तम्। "न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि[२]"इत्यत्र "ज्ञात्वा देवम्[३]"इत्यादिश्रुतेस्त्वर्थ उच्यते।देवं द्योतनस्वभावं परमात्मानमित्यर्थः। नत्वैश्वर्यसंपन्नमीश्वरं ज्ञात्वा दर्शनश्रवणमननैर्विदित्वास्य जीवस्य संसारपाशबन्धस्य सर्वपाशावहानिः

१.कैवल्योपनिषत् 7

२.ब्रह्मसूत्रम् 3.2.11

३.श्वेताश्वतरोपनिषत् 1.11

अहमिदं ममेदमित्यादिसमस्तपापक्षयो भवतीति शेषः।

क्षीणैः क्लेशैर्हेतुभिर्जन्ममृत्युप्रहाणिः अविद्याकृतजननमरण-प्रवाहनिरोधश्च भवति।न त्वविद्याहानिः।तस्मात् तस्य विद्याहानि-रिति।

तस्य निर्विशेषस्य परब्रह्मणोऽभिध्यानान्निदिध्यासनाद्देहभेदे कारणदेहे नाशे सति तृतीयं पितृयाणदेवयानमार्गगम्यद्विविधैश्वर्या-तिरिक्तं विश्वैश्वर्यं सार्वात्म्यमित्यर्थः।यातीति शेषः।कथं भूतः सन्नित्यत आह-केवलः निर्विशेषचैतन्यस्वभावःआप्तकामः पर्याप्तमनोरथश्च सन्।

यद्युच्येत ज्ञानैश्वर्याभ्यां जीवस्येश्वरसमानधर्मत्वेऽभ्युपगम्यमाने जीवस्येश्वरधर्मविपरीतकर्तृत्वादिप्रत्यक्ष संसारधर्मापलापप्रसंगात् जीवब्रह्मणोरंशाशिभावोऽनुपपन्न इति।तन्नोपपद्यते। अग्निविष्फुलिङ्ग-योरिव चैतन्यांशे साम्योपपत्तेः।घटशरावोदकयोर्हि समानशैत्यधर्मत्व-मैक्यं च सिद्ध्यति।

ननु प्राग् विद्यमानयोरेव जीवस्य ज्ञानैश्वर्ययोरविद्यया तिरोभाव इत्यत्र ज्ञानशब्दस्य वृत्तिज्ञानपरत्वे मुक्तस्य पुनरुत्पत्तिदोषप्रसंगे सत्यपि स्वरूपज्ञानपरत्वे सत्यज्ञानानन्तलक्षणस्य ब्रह्मणः कालत्रयसद्भावात् जीवस्य प्राग् विद्यमानं ब्रह्मत्वमविद्यया तिरोहितं सद् विद्ययाऽभिव्यज्यत इति वक्तुं शक्यमिति चेदत्रोच्यते-

नह्येवमपि प्राक् तिरोभावाज्जीवस्यैश्वर्यमासीदिति वक्तुं युक्तम्। ईश्वरस्यैव पुनर्जीवत्वापत्त्या अत्तृत्वादिसंसार ईश्वरस्येत्यानर्थक्यप्रसंगात्। ईश्वरस्य ह्यैश्वर्यवतः स्वारब्धाधिकारावसाने कैवल्यं प्रसिद्धम्। तदनेन बाध्येत।

तर्हि "तत् सृष्ट्वा तदेवानुप्राविशद्[१]" "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि[२]" इत्यादिश्रुतिभ्यः परमेश्वरस्यैव स्रष्टुरनुप्रवेशोऽवगम्यते।तेनैव चास्य जीवस्य तत्त्वमसीत्यैक्यमुपदिश्यते।

नच निर्विशेषं ब्रह्मानुप्रविष्टमिति वाच्यम्।तस्याकारणत्वेन स्रष्टृत्वप्रवेष्टृत्वाद्यनुपपत्तेः। तस्मादनुप्रविष्टस्य स्रष्टुरेव जीवभावापत्तिश्रवणादीश्वरानन्यत्वाच्च जीवस्य प्राग् विद्यमानमेवेश्वरत्वमविद्यया तिरोहितं सद्विद्ययाऽभिव्यज्यत इति।

अत्रोच्यते। न ह्यस्य जीवस्यानुप्रविशतेश्वरेण सहैक्यमुपदिश्यते।अविशेषेश्वरतत्त्वोपमर्दद्वारा निर्विशेषब्रह्मणैक्योपदेशप्रसिद्धेः। यद्यपि ब्रह्मणो जीवभावापत्तिरुपपद्यते, "ब्रह्मैव सन् ब्रह्माप्येति[३]" इति श्रुतेः; नत्वीश्वरस्य स्रष्टुः ।

यद्यपि च ब्रह्मानन्यत्वं जीवस्य भवितुमर्हति, "तस्मात् परं नापरमस्ति किञ्चिद् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्[४]", "अहमेकः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चन मत्तो व्यतिरिक्त[५]" इत्यादिश्रुतिभ्यः; नत्वीश्वरानन्यत्वं जीवस्य-"ऋतं पिबन्तौ सयुजौ सखायौ समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति[६]"-इति श्रुतेरीश्वरान्यत्वश्रवणात्।

१.तैत्तिरीयोपनिषत् 2.6

२.छान्दोग्योपनिषत् 6.3.2

३.बृहदारण्यकोपनिषत् 4.4.6

४.श्वेताश्वतरोपनिषत् 3.9

५.अथर्वशिर उपनिषत् 1

६.मुण्डकोपनिषत् 3.1.1

नच रज्ज्वादौ सर्पादिरिव भ्रान्तिपरिकल्पितत्वाज्जीवस्य देहेऽस्मिन्नीश्वर एव विद्यत इति वाच्यम्, ईश्वरस्यैवोत्क्रान्त्यादिदोषप्रसंगात्। न चेमं देहं प्रविश्य संचरता जीवात्मनाऽनुप्रविष्टो नियन्तृभूतं ईश्वरो नर्तक्या इव सूत्रधारोऽनन्यो भवितुमर्हति।यथा नर्तकीं विना सूत्रधारोऽन्यत्र नास्ति। नच सूत्रधारं विना नर्तकी। तद्वज्जीवं विनेश्वर ईश्वरं विना जीवश्च क्वचिदपि विद्यत इत्यत उभयोर्न कदाऽप्यनन्यत्वं सिद्ध्यतीत्यवगन्तव्यम्।

नन्वीश्वरं विना जीवः क्षणमपि न जीवितुं शक्नुयात्, रक्षकत्वादीश्वरस्य।नैवम्। जीवं विनेश्वरो नेति युज्यते, तस्य स्थावरादिष्वजीवेष्वपि विद्यमानत्वात्।तथाहि-घटः सन् पटः सन्निति सर्वत्र सद्रूप ईश्वरोऽवगम्यते।

अत्रोच्यते। नहि स्थावरेष्वीश्वरोऽस्ति। ब्रह्मण एव सद्रूपस्य विद्यमानत्वात्। जङ्गमेषु त्वीश्वरब्रह्मणोरुभयोरपि विद्यमानत्वेन लक्षणयेश्वरं विहाय प्राग् जीवभावमापन्नेन ब्रह्मणा सहास्य जीवस्यैक्योपदेश उपपद्यत इत्यनवद्यम्।



## ७६.भाष्यान्तरासामञ्जस्याधिकरणम्।

**भाष्यान्तराणीति चेन्न त्रयाणामप्यसामञ्जस्यात्।**

अपि च केचिदाहुः-अथातो ब्रह्मजिज्ञासेति बादरायणसूत्रस्य चत्वारि भाष्याणि लोके प्रसिद्धानि सन्ति।शाङ्करं श्रीकण्ठीयं रामानुजीय-मानन्दतीर्थीयं चेति।तेभ्योऽन्यानि त्वप्रसिद्धानि।तत्र चाद्यस्य शाङ्करभाष्यस्यैवं बहुविधदोषास्पदत्वेऽपीतरेषां निर्दुष्टता स्यादिति। अतस्तद्विचारार्थमिदमधिकरणमारभ्यते।

किं श्रीकण्ठीयादीनि त्रीणि भाष्याणि सूत्रकाराशयानुसारीणि स्युः?आहोस्विदननुसारीणीति संशीयते।

किं तावत् प्राप्तम्?अनुसारीणीति।कुतः? त्रयाणामपि भाष्य-काराणां शङ्कराचार्यमतविरुद्धत्वेन शङ्करभाष्यशोधकतया प्रवृत्तत्वो-पपत्तेः। तस्मात् सूत्रकाराशयानुसारीण्येव श्रीकण्ठीयादीनि त्रीणि भाष्याणि स्युरिति ।

एवं प्राप्ते ब्रूमः।सूत्रकाराशयाननुसारीण्येव त्रीण्यपि भाष्या-णीति। कस्मात्? त्रयाणामप्यसामञ्जस्यात्।किं नामासामञ्जस्यम्? उच्यते-तेषां सिद्धान्तो ह्येवमसमञ्जसो भवति।

यत एवं श्रीकण्ठीयमतानुसारी विशिष्टाद्वैती शैव आह-"तान्त्रिकोक्तविधानेन भस्मरुद्राक्षलक्षणैः।समयाचारनिर्वाणदीक्षितै-रपि सेवितम्। कारणं सर्वजगतां पशुपाशविमोचकम्। स्थूलसूक्ष्म-चिदचितामन्तर्याम्यैक्यमानतः। विशिष्टाद्वैतसिद्धान्तशिवज्ञानान्मुनि-

भवेत्। स्वदेहान्ते परशिवदेहसायुज्यमाप्नुयात्।[१]"इति ।

अतः श्रीकण्ठमतस्थानां तान्त्रिकत्वात् सायुज्यमुक्तौ पर्यवसन्नाशयत्वेन कैवल्यमुक्तिपर्यवसन्नसूत्रकाराशयविरोधित्वाच्चास्माभिस्तदीयं भाष्यमपि शाङ्करभाष्यमिव उपेक्षितमेव।

अन्यत्तु रामानुजीयं भाष्यं सुतरामुपेक्षितम्।कुतः? ते हि रामानुजीयास्तान्त्रिका एवमाहुः-

"चक्राङ्कनोर्ध्वपुण्ड्रश्रीतुळसीकाष्ठभूषणाः। प्रवृत्तिमार्गतो ये मां भजन्ते ते हि वैष्णवाः। स्थूलांशात् परिणामित्वं निमित्तत्वं स्वरूपतः। स्थूलसूक्ष्मचिदचितोरैक्यं जीवेशयोर्भिदा।एवं तत्त्वज्ञानफलमप्राकृतहरेस्तनोः।समानरूपतां प्राप्य वैकुण्ठे वसतिर्भवेत्[२]"इति।

अतः श्रीकण्ठमतसिद्धान्तभूतसायुज्यमुक्तेरप्यर्वाचीनायां सारूप्यमुक्तौ पर्यवसन्नं रामानुजीयं भाष्यं सुतरामुपेक्षणीयमेवोपेक्षितम्।

चतुर्थं त्वानन्दतीर्थीयं भाष्यं सुदूरतोऽत्यन्तमुपेक्षितम्।कुतः? ते ह्यानन्दतीर्थीयाः केवलद्वैतिनस्तान्त्रिकाश्चैवमाहुः-

"कर्णे श्रीतुलसी फाले पञ्चमुद्रोर्ध्वपुण्ड्रधृत्।एकादशीव्रती तीर्थकरश्चेद् वैष्णवो भवेत्।नित्यो जीवोऽणुरीशस्तु वैकुण्ठसदनो गुणी। ईशः सेव्यः सेवको तद्भेदज्ञानयुतो मुनिः।यद्देहे यादृशं ज्ञानं पञ्चमुद्रासमुज्ज्वलम्। प्राप्य तादृग्दिव्यदेहं विष्णोः सालोक्यमश्नुते[३]"इति।

अत एवंभूतस्यानन्दतीर्थीयभाष्यस्य सालोक्यमुक्तिपर्यवसन्नत्वात्

---

१.(?)

२.(?)

३.(?)

कैमुतिकन्यायेनात्यन्तमुपेक्षणीयत्वमुपपद्यते।

ननु श्रीकण्ठादित्रयाणामप्युक्तपूर्वाणां तान्त्रिकत्वेन विशिष्टाद्वैतित्वेन चावैदिकत्वादब्रह्मवित्त्वाच्च तत्प्रणीतभाष्योपेक्षोपपद्यते। शङ्कराचार्यस्य तु शुद्धवैदिकत्वेन ब्रह्मवित्त्वेन चातान्त्रिकत्वात् निर्गुणाद्वैतित्वाच्च तदुपेक्षा नोपपद्यते। यद्यपि शङ्कराचार्यशिष्याः केचन शाक्ततन्त्रमनुतिष्ठन्तीत्युपेक्षाबुद्धिः स्यात्। तथापि तद्गुरुभूतस्य तस्य तादृशतन्त्रानुष्ठानाप्रसिद्धेः। तादृशानुष्ठानविधायकग्रन्थप्रवर्तकत्वाभावाच्च विशुद्धब्रह्मविद्याप्रधाने तस्मिन् उपेक्षाऽनुपपन्नेत्यत्रोच्यते-

न हि शङ्कराचार्यः शुद्धवैदिक इत्यवगन्तुं शक्यम्। शाक्ततन्त्रप्रविष्टत्वात्।तादृशानुष्ठानविधायकप्रपञ्चसारादिग्रन्थकर्तृकत्वाच्च। तेन हि प्रमाणबलेन तदनुष्ठानबलेन च तदीया इदानींतना अनिर्वचनीयदुराचारान् कुर्वन्ति। अतस्तान्त्रिकशेखरे शङ्कराचार्ये तत्प्रणीतग्रन्थेषु च मुमुक्षुभिर्वैदिकैरुपेक्षा कर्तव्यैव। इतरे तु श्रीकण्ठादयो यद्यप्यवाच्यदुराचारप्रवर्तका नाभवन्।तथाऽप्यद्वैतविरोधित्वात्तेषु चोपेक्षैव युज्यते।

**हेयांशपरवशत्वाच्च।**

इतश्च ते श्रीकण्ठादयस्त्रयो भाष्यकर्तारः शुद्धवैदिकैर्निर्गुणाद्वैतापरोक्षानुभववादिभिरस्मदीयैरुपेक्षणीया एव।कस्मात्? ते हि श्रीकण्ठादयस्तत्पदहेयांशसगुणेश्वरपरवशा भवन्ति। कथं तेषाम् "अथ योऽन्यां देवतामुपास्ते [१]" इत्यादिश्रुतिनिन्दितद्वैतोपासनतत्पराणामपेक्षणीयत्वं स्यात्? यतो यन्निर्गुणब्रह्माद्वैतप्रतिष्ठापनपरः शङ्कराचार्योऽपि क्वचित् सगुणभक्त्या क्वचिन्निद्रालस्यादिना क्वचित् प्रमादेन

१.बृहदारण्यकोपनिषत् 1.4.10

च मुमोहेति तद्विरचितभाष्यवचांस्येव सूत्रविपरीतार्थानि सूचयन्ति। कथं तदितरेषां महामोहाविष्टचित्तानां सूत्रानुसारिभाष्यकर्तृत्वं स्यात् ? कथं वाऽस्माकं तेष्वपेक्षा स्यात् ? प्रमाणत्रय-विरुद्धत्वात्तूपेक्षैवोत्पद्यते।

**असर्वश्रुतयोऽतश्चोपेक्षा।**

इतश्चास्माकं तेषु चतुर्विधेष्वपि भाष्येषूपेक्षाबुद्धिरुत्पद्यते। कुतः ? यतस्ते भाष्यकारा असर्वश्रुतयः। सर्वश्रुतयो येषां ते सर्वश्रुतयः। न सर्वश्रुतय इति।

कथमसर्वश्रुतित्वमिति? उच्यते-ते ह्यष्टोत्तरशतोपनिषद उपेक्षन्ते। न ह्येवं मूलभूतस्य वैयासिकसूत्रस्य तादृशदोषवत्त्वेऽपि परोक्षज्ञानोप-युक्तत्वान्नात्यन्तोपेक्षाऽस्ति। तस्मात् सर्वमनवद्यम्[1]।



1.परम्परीणया पद्धत्या कृताध्ययनस्य अप्पयशिवस्य उपनिषदां विचारस्तरीयम् उच्चावचत्वं वा, रचनाकालदृष्ट्या कासाञ्चनाधुनिकत्वं वा स्वप्नेऽप्यनूह्यम्-इत्यत्र न संशयः।तस्मादयं ''असर्वश्रुतयोऽ-तश्चोपेक्षा'' इति सूत्रयन् स्वकीयभाष्यस्य परमोत्तुङ्गे स्तरे वर्तमानताम् अधिकृत्य साभिमानं सावेशं च वदतीति स्पष्टम्।।भाष्यान्तरकाराणां शुद्धोपनिषदननुयायित्वं यदापादयत्येषः, तत्रैतद् विचारयितव्यं-किमेष वस्तुत उपनिषदेकप्रामाण्यम् अवलम्बत इति ।पराशरोपपुराणस्य तत्र तत्र स्वग्रन्थेषु उद्धृतत्वमेवास्य उपनिषदेकप्रामाण्यावलम्बनम् शिथिलयति।पुराणेऽस्मिन् प्रसिद्धानां सुज्ञातानां च '' अल्पाक्षरमसन्दिग्धम्

सारवद् विश्वतोमुखम् ” इत्यादिश्लोकानां संकलनं, वैष्णवानां मुक्तिर्न सिद्ध्यतीति युक्तिप्रतिपादनलेशहीना घोषणा, सृष्टिविचारो मुमुक्षुत्व-विचारस्तत्त्वविचार इत्यादिकं च वर्तते। प्राचीनेभ्यो ग्रन्थेभ्य उद्धृतांशा बहवोऽत्र प्रकामं गोचरीभवन्ति। पराशर उपनिषत्सारं कथयामीति घोषयत्यत्र। भस्मादिपुण्ड्रधारणमवश्यं कर्तव्यमित्युपदिशन्नेष पराशरः यज्ञत्यागिनः पापिन इति, वैष्णवचिह्नधारणेन च नरकप्राप्तिरिति च भाययति पाठकान्। प्राच्यविद्यासंशोधनालयस्थायां मातृकायां कालहस्तीशदेवतायाः पूजाऽवश्यं कर्तव्येति बोध्यते पुराणकारेण। संस्थायां वर्तमानायां मातृकायां (B.914) दृश्यमानः पुराणपाठः शैवानां रचनेत्यत्र न संशयः।

‘अन्ये भाष्यकारा वस्तुतस्तान्त्रिका एव तेषु तान्त्रिकाचाराणां बहुलमुपलब्धेः’ इति प्रतिपादनार्थम् अप्पयशिवेनोद्धृताः श्लोकाः कुत्रत्या इति न ज्ञायते।

अत्राद्वैतिभिर्भाव्यमप्रमादैः। आदिशङ्कराचार्यस्य तान्त्रिकत्वं प्रति यदस्याधिक्षेपस्तत्र अशाङ्कराणामपि रचनानां शाङ्करत्वेन या प्रसिद्धिः सा प्रसिद्धिरेव कारणम्। प्रस्थानत्रयभाष्यातिरिक्तानां ग्रन्थानां शङ्कराचार्यविरचितत्वप्रतिपादनं चिन्त्यमिति सच्चिदानन्देन्द्रसरस्वती-स्वामिप्रभृतिभिः शङ्करभगवत्पादवृत्तान्तसारसर्वस्वादिषु ग्रन्थेषु स्फुटमेव दर्शितम्। प्रपञ्चसारसौन्दर्यलहर्योरादिशङ्कराचार्यप्रणीतत्वं बलवत् समर्थयमानाः अद्वैतिनः(केचन शङ्करानुयायिनोऽपि!) केवलम् आवेशबलात् ‘अद्वैतिभिः तन्त्रशास्त्रं नाध्येतव्यमिति वा, अधीते च तन्त्रशास्त्रे तत्र स्वयं ग्रन्थरचना न करणीयेति वा नास्ति राजाज्ञा’ इति कथयन्तस्तत्र हेतुत्वेन ‘सर्वज्ञेन शङ्कराचार्येण तन्त्रग्रन्थो रचित

इत्यत्र को विस्मय' इत्यपि पृच्छन्ति।

त इमे प्रष्टव्याः:-अद्वैतिभिस्तन्त्रग्रन्था अध्येतव्या एवेति राजाज्ञाऽस्ति किम् ? वस्तुतस्तु अद्वैतशास्त्रेषु उपनिषद्भिन्न-ग्रन्थानामध्ययनं नैव सूच्यते। शब्दप्रमाणकोटौ तन्त्रग्रन्थास्तेषु न कीर्त्यन्ते नाम्ना। उपनिषद्भिन्नग्रन्थानामध्ययनस्य निषेध एव वस्तुतो वर्तते तत्र। सर्वज्ञत्वव्याहारस्त्वतितमां हास्यास्पदं, तदङ्गीकारे व्याकरणजैन-वैशेषिकेषु शङ्करेण किमर्थं लेखनी नैव व्यापारित इत्यप्रतिसमाधेयस्य पर्यनुयोगान्तरस्य जननसंभवात्। 'सत्यपि सर्वज्ञत्वे तस्य कुत्र कदा तस्य प्रदर्शनं करणीयं कुत्र नेत्यत्र स सर्वज्ञ एव निर्धारयति, तत्रास्माभिर्न किमपि वक्तव्यम् 'इति वादो नादर्तव्यः ।

अधिसौन्दर्यलहरि कश्चन भक्तिपथ एव सृष्टोऽस्माकं राष्ट्रे।

सौन्दर्यलहरी किल कौल-समयाख्य-तन्त्रोभय-सृति-प्रविष्ट-तान्त्रिकाणां स्तोत्राकारं धृतवती पाठ्यकृतिः। सौन्दर्यलहर्या आदि-शङ्कराचार्यप्रणीतत्वं स्वप्नेऽप्यसन्देग्धव्यविषयं मन्यमानानां श्रूयतामियम् सोद्वेगा भणितिः :-“सामान्यानां कृते शङ्कराचार्येण स्तोत्राणि तन्त्रकृतयश्च व्यरचिषत। विदुषां कृते तु वेदान्तग्रन्थाः।”अत्र केचन विचारा अवधातव्याः।

आदिशङ्कराचार्यस्य जीवितकाले प्रसिद्धं साङ्ख्यशास्त्रं शिष्टैरपि परिगृहीतमासीत्। तस्य खण्डनं किमर्थमारभत सः ? सामा-न्यानां कृते साङ्ख्यमस्त्विति किमर्थं स तन्मण्डनं नाकरोदथवा तस्मिन्नेव साङ्ख्यशास्त्रे लेखनीं किमिति न व्यापारयामास ? मन्दाधिकारिभिस्तन्त्र-शास्त्रमादर्तव्यमिति कुत्रापि प्रस्थानत्रयभाष्ये किमिति नावदत्?

श्रीविद्या-कादिमत-हादिमतादिशब्दाः किमर्थं तेनैकवारमपि स्वकीयासु प्रस्थान-त्रयसंबद्धासु कृतिषु न दर्श्यन्ते ?

वेदान्ताः सुलभाः। तन्त्रं तु क्लिष्टम्। पारिभाषिक-शब्दानां किल काननं तन्त्रम्। सामान्या अपि वेदान्तं सलीलमवगच्छन्ति न तु तन्त्रम्।

सौन्दर्यलहरी तु निर्लज्जमेव कामुकत्वातिरेकसिद्धिं तन्त्राभ्यास-फलत्वेन सुस्पष्टमाख्याति। क्व शमदमादीनि बिभ्राणा एव ब्रह्मविद्या-विचारार्हा इति वदन्तो ग्रन्थाः ; क्व च "श्रीसुन्दरीसाधनतत्पराणां भोगश्च मोक्षश्च करस्थ एव" इति कामुकत्वफलं निःसंकोचं प्रतिपादयन्ति तन्त्राणि ? वेदान्तविचारस्य मोक्ष एव फलं, न तु भोगः। आचार्यस्य सर्वज्ञत्वसिद्ध्यै आदृता वादास्तन्महत्त्वस्य नैयून्यं कुर्वन्तीव ।

सौन्दर्यलहर्या आदिशङ्कराचार्यप्रणीतत्वं वदन्तोऽन्यां च सूक्ष्मां दृष्टिं प्रदर्शयन्त इत्थमाहुः-"शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुम्" इति सौन्दर्यलहर्यां यदुक्तं तदेव 'शक्तिशक्तिमतोरभेद' इत्यनेन वाक्येन भगवद्गीताभाष्येऽपि (१४.२७) प्रत्यपादि। तस्माद् गीताभाष्यकर्तृ-सौन्दर्यलहरीरचयित्रोरभेदः सिद्ध्यति"इति।

वस्तुतस्तु त्रिमूर्तीनामपेक्षया शक्तेरौत्कृष्ट्यमत्र प्रतिपिपाद-यिषितम्। शिवशक्त्योरभेदो नात्र विषयः। शक्तिं विना शिवो विद्यत एव, परन्तु स 'शक्तिहीनो' भवतीत्यत्राकूतम्। सौन्दर्यलहरीकर्ता यदि शिवशक्त्योरभेदमनेन पद्येन प्रत्यपादयिष्यत् स्फुटमेव तथाऽकथयिष्यत्, न तु शक्तेस्तान्त्रिकमतानुसारेण सपर्यादिकम् असूचयिष्यत्। वैष्णवा

विष्णुं, शैवाश्च किल शिवं सर्वोत्तमं प्रतिपादयन्ति, तद्वत्, शक्तिरेव परमा देवतेति शाक्तानां मतमत्र स्फोरितमिति तु बालकस्यापि स्ववबोधोऽयमंशः।

अपि च व्याख्याता लक्ष्मीधरोऽत्र 'शक्तिशक्तिमतोरभेदं' न पश्यति, यः " इच्छाशक्त्याश्रयत्वादीश्वरस्य शिवत्वं", "स्वप्नं वाति क्षिपतीति शिवः,जाड्यरहितः अविद्यानिर्मुक्त इत्यर्थः। यद्वा स्वप्नमविद्यां वाति गच्छतीति शिवः,सादाख्यकलासंवलित इति यावत्। तस्यैव शिवशब्दवाच्यत्वं वक्ष्यते। तादृशः शिवः शक्त्या जगन्निर्माणशक्त्या युक्तः अवच्छिन्नः अविद्यावच्छिन्नचैतन्यस्यैव ब्रह्मणः जगन्निर्माणे शक्तत्वात्" इत्यादि व्याख्याति।

अग्रे तान्त्रिकं रहस्यमेवमुद्घाटयति-

" आगमरहस्यार्थस्तु शिवशब्देन नवयोनिचक्रमध्ये चतुर्योन्यात्मकमर्धचक्रमुच्यते। शक्तिशब्देनावशिष्टं पञ्चयोन्यात्मकमर्धचक्रमुच्यते। एवमर्धद्वयमिलितं नवयोन्यात्मकं चक्रं भवति। एतस्माच्चक्रादेव जगदुत्पत्तिस्थितिलया भवन्तीति पुरस्तान्निवेदयिष्यते। तन्मेलनादेव जगदुत्पत्तिस्थितिलयाः, न केवलादेवेति वक्ष्यते। यथोक्तं वामकेश्वरतन्त्रे चतुश्शत्याम्-'परोऽपि शक्तिरहितः शक्त्या युक्तो भवेद् यदि। सृष्टिस्थितिलयान् कर्तुमशक्तः शक्त एव हि।'-"

नात्र लक्ष्मीधरः शक्तिशक्तिमतोरैक्यं प्रतिपादितवान्।

सौन्दर्यलहर्यां द्वाविंशे पद्ये " 'भवानी' इति शब्दोच्चारणानुपदं त्वयि 'सायुज्यं' लभते भक्त"इतीर्यते। "उपनिषदध्ययनजेन विचारेणापावृतायामविद्यायामात्मज्ञानं मोक्ष"इति घोषयत्यद्वैतशास्त्रम्। भवानीशब्दोच्चारणस्य मोक्षहेतुत्वं, सायुज्यमुक्तिं च वदति सौन्दर्यलहरी!

ज्ञानकर्मसमुच्चयं वा केवलकर्म वा साध्यस्य मोक्षस्य साधनमिति यः स्वप्नेऽपि नाङ्गीकरोति स कथं हृदयजुगुप्सनं कामातिरेकं फलत्वेन ददाने तन्त्रप्रयोगे स्वमतिं बध्नीयादुपदिशेच्च तदेव स्वानुयायिभ्यः ?

"सौन्दर्यलहरीं कर्ता 'शिव इति, शिवेति, शङ्कराचार्य इति' च दृष्टित्रयं सौन्दर्यलहरीव्याख्यायां डिण्डिमाख्यायां दर्शितम्। सुधा-विद्योतिनीव्याख्यायां 'प्रवरसेनः' सौन्दर्यलहरीकर्तेत्युक्तम्। 'तिरुज्ञान-संबन्धर्' नामकः शैवाचार्योऽस्य रचयितेति तमिळुनाडुराज्ये केषाञ्चन मतम्।

अस्माकमत्रेत्थं प्रतिभाति। सौन्दर्यलहरीं 'शङ्करभगवत्पादो' रचयामास इति व्याख्यातुर्लक्ष्मीधरस्योक्तिरेव सौन्दर्यलहर्या आदि-शङ्कराचार्यप्रणीतत्वे सर्वत्र भारते वर्तमानस्य विश्वासस्य निदानम्। 'भगवत्पाद' इति संज्ञा तान्त्रिकाणामप्याचार्याणमासीदेव। सौन्दर्यलहर्या एकोनशततमस्य (९९) पद्यस्य व्याख्यायां 'सकलजननीस्तोत्रं' रचयिता कश्चन 'कालिदासभगवत्पादः' स्मर्यते लक्ष्मीधरेण। प्रायशोऽनेनैव 'कालिदासभगवत्पादे'न 'श्यामलादण्डकं' रचितवता भाव्यम्। एतेन कोऽपि तान्त्रिकः शङ्करभगवत्पादः सौन्दर्यलहरीं कर्तेति करबदरायितम्।

शङ्कराचार्येण प्रतिपादितानां सिद्धान्तानामसम्मतौ तस्य तान्त्रि-कत्वं यदप्पयशिवादयो विद्वांसो मन्यन्ते, तत् पामराणामप्युपहासास्पदम्। अत्राप्पयशिवादीनां सम्यञ्चं मार्गमदर्शितवन्तः, शाङ्करकृत्यशाङ्कर-कृतीनां भेदनिर्धूनेन सर्वमेकराशीकृतवन्त एव प्रतिभुव इति शम्।



# कैवल्यसाधनम्[1]

१. श्रीमद्गुरुं प्रणम्याथ साधनं शास्त्रसम्मतम्।
सद्यः कैवल्यमुक्त्यर्थं संग्रहेणोच्यते शृणु ॥

२. "यथा निरिन्धनो वह्निः स्वयोनावुपशाम्यति ।
तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यति[१] ॥"

३. इति श्रुत्योच्यते यत्तच्चित्तयोनिः परं महः ।
ब्रह्म सच्चित्सुखानन्तमखण्डं निर्गुणं मतम् ॥

४. चित्तवृत्तिक्षयस्तस्मिंस्तद् ध्यानादेव संभवेत् ।
"यथोपास्ते तथैव स्या[२]"दिति श्रुत्या च निश्चितम् ॥

५. चित्तवृत्तौ निरुद्धायां ब्रह्मण्यद्वयचिद्घने ।
ध्यानेन चित्तं लीयेत स्वयमेव निराश्रयात् ॥

६. यथेश्रयेन्धनापाये कार्याग्निः स्वयमात्मनः ।
कारणेऽग्नौ लयं याति तथैवात्रावधारय ॥

७. आश्रयाश्रयिणोभवि संसारो वृत्तिचित्तयोः ।
तयोरभावे मोक्षः स्यात् तस्य ब्रह्मात्मनिष्ठया ॥

८. "ब्रह्माकारमनोवृत्तिप्रवाहोऽहंकृतिं विना ।
संप्रज्ञातसमाधिः स्याद् ध्यानाभ्यासप्रकर्षतः[३] ॥"

---

1. ORI हस्तप्रतिसंख्या B.332 (तेलुगु), B.333 (ग्रन्थ)

१.मैत्रायण्युपनिषत् 6.34

२.(?)

३.मुक्तिकोपनिषत् 2.56

९. इति श्रुत्यनुरोधेन यो वृत्तिं ब्रह्मगोचराम् ।
प्रवाहयेत् समाधिस्थः सद्यः कैवल्यमश्नुते ॥

१०. प्रशान्तवृत्तिके चित्तेऽप्यत्र सुप्तौ दिने दिने ।
अमोक्षादफलैवोक्तिरिति न ध्यानवर्जनात् ॥

११. वृत्तिक्षये हि संसिद्धे ब्रह्मध्यानपुरःसरम् ।
संसारमोक्षसंसिद्धिः सुषुप्तौ ध्यानवाक् कुतः? ॥

१२. वृत्तयो हि न दृश्यन्ते चक्षुषैव घटादिवत् ।
नैल्यादिलक्षणानीव तासां कानीति चेत् शृणु ॥

१३. चित्तवृत्त्यनुविद्धानाम् इन्द्रियाणां प्रवृत्तिभिः ।
शुभाशुभानि दृश्यन्ते वृत्तयोऽन्तर्दशाः स्फुटम् ॥

१४. आशाख्या वृत्तिरक्षीणा यावच्चित्तगता भवेत् ।
तावदिन्द्रियसंबन्धान्नैकान्त्यं सेत्स्यति क्वचित् ॥

१५. विहायेन्द्रियसंबन्धं वृत्तीर्यच्छन् परात्मनि ।
निराश इति विज्ञेयः शुभाशुभविवर्जनात् ॥

१६. नैराश्यं विषयेषु स्यात् पुण्यैश्चित्तस्य पैतृकैः ।
संशुद्धस्य विवेकैश्च नित्यानित्यपदार्थयोः ॥

१७. देहाभिमाने गळिते भोगवाञ्छाविवर्जनात् ।
चित्तस्येन्द्रियसंयोगो न कदाऽपि भविष्यति ॥

१८. आशाख्या वृत्तिरेषा हि वृत्तीर्भानयतीतराः ।
बीजमेकं यथा शाखा उपशाखाश्च नैकधा ॥

१९. आशाबीजे विवेकेन वह्निना भर्जिते सति ।
सर्वासां वृत्तिशाखानां शुष्कता स्वयमुद्भवेत् ॥

२०. अथवा संपरित्यज्य विषयाणां महामतिः ।
वर्तयेदादरेणैव ब्रह्माशां मोक्षदायिनीम् ॥

२१. चित्तवृत्तिषु रुद्धासु तथा सन्त्विन्द्रियाणि च ।
कथं स्यात् प्राणसंरोध इति चेच्छृणु सुव्रत ॥

२२. नान्योऽभ्युपायः कर्तव्यश्चित्तवृत्तिनिरोधतः ।
ब्रह्मध्यानाद्धि रुध्यन्ते स्वयं प्राणाः स्ववृत्तिभिः ॥

२३. पृथङ् निरोधः प्राणानां शास्त्रेषु हि विधीयते ।
इति चेद्धठयोगः स मोक्षे नात्रोपयुज्यते ॥

२४. देवदत्ते समाकृष्टे यज्ञदत्तो न तप्यते ।
ततश्चित्तनिरोधेन प्राणरोध इतीह न ॥

२५. अङ्गाङ्गिनोरिवाभेदादेकस्मिन् प्राणचित्तयोः ।
आकृष्टे कृष्यतेऽन्यश्च समकाले न संशयः ॥

२६. तर्हि प्राणनिरोधाच्च चित्तरोधो भवेत् स्वयम् ।
इति चेद् बाढमेवं स्यात् तथाऽप्यस्ति न मोचनम् ॥

२७. रुद्धासु प्राणसंरोधाच्चित्तवृत्तिषु कुम्भकात् ।
ब्रह्मध्यानसमर्थत्वात् तच्छ्रमः स्यान्निरर्थकः ॥

२८. बद्धः कः कर्म किं कुर्यात् कर्ता बद्धो हि दृश्यते ।
ततः प्राणैरबद्धं तच्चित्तं ध्यायेत् परं महः ॥

२९. न चास्ति ध्यानकर्तृत्वं प्राणानां देहिषु क्वचित् ।
रुद्धानां वाऽप्यरुद्धानां प्राणायामो वृथा ततः ॥

३०. सप्ताङ्गेषूपयुक्तेषु चतुर्थाङ्गस्य केवलम् ।
कथं वाऽनुपयुक्तत्वं वक्तुं शक्यं मनीषिभिः ॥

३१. इति चेन्नैष दोषोऽस्ति प्रागभ्यस्तत्वदर्शनात् ।
प्रत्याहारक्षमस्यैवं पूर्वाभ्यासः किमर्थकः ॥

३२. प्रत्याहृताश्चित्तवृत्तीरिन्द्रियेभ्यः परात्मनि ।
प्रतिष्ठापयितुं शक्तः किमर्थं कुम्भमाचरेत् ॥

३३. सुप्ताविव समाधौ च प्राणानां विलयं विना ।
निर्वृत्तिकं भवेच्चित्तम् इति चेन्नोपपद्यते ॥

३४. अभानावृत्तिमान् सुप्तः तद्विहीनः समाहितः ।
अभानावृत्तिनाशोऽसि(पि?) न स्यात् प्राणलयं विना ॥

३५. चित्तप्राणोभयाभावात् मूर्छायां मुक्तिरिष्यते ।
इति चेत् सुप्रसन्नास्यो मुक्तो मुग्धोऽभयङ्करः ॥

३६. नच स्वरूपनिष्पत्तिर्मुग्धस्यास्ति परात्मनः ।
पूर्णस्याध्यात्मपूर्वत्वात् स्वतः सा च न जायते ॥

३७. मुग्धो मुसलपातेन मुक्तोऽन्यस्तु समाधिना ।
एवं साधनभेदाच्च नैक्यं स्यान्मुक्तमुग्धयोः ॥

३८. अशेषनामरूपाणि मनसा संपरित्यजन् ।
महाकाशवदेकान्ते प्रथमं ब्रह्मभावनम् ॥

३९. अथ तज्ज्योतिषां ज्योतिः संपूर्णं सर्वगं परम् ।
ब्रह्मैवास्मीत्यनुस्यूतप्रत्ययावृत्तिमाचरेत् ॥

४०. नियमेनाचरन् विद्वान् ब्रह्मप्रत्ययसंततिम् ।
ब्रह्मैवाप्येति चित्तस्य स्वयोनावुपशान्तितः ॥

४१. सर्वेषां ब्रह्मकार्यत्वात् मुक्तौ देहलयोऽपि च ।
भवितव्य इति प्राहुः केचित्तत्तु न संगतम् ॥

४२. कर्मणा पृथगुद्भूते देहे स्थूले प्रवेशतः ।
जीवः संसार्यभूत्तस्य मुक्तिर्ब्रह्मप्रवेशतः ॥

४३. अतो देहः पतत्वेष दहनात् खननाच्च वा ।
संस्कारोत्वमुम् अन्यस्वो (??) मुक्तेर्भङ्गो न तावता ॥

४४. चित्तप्राणेन्द्रियाण्येवं पृथग्जातानि नात्मनः ।
न चास्ति सन्ततिस्तेषां देहस्येव पुनः पुनः ॥

४५. स्थूलापायेऽपि तौ स्यातां सूक्ष्महेत्वनपायिनौ ।
तयोरपाये नैष स्यात् स्थूलदेहः कदाचन ॥

४६. एवं सति मुमुक्षोरप्यत्र सद्यो[१] महात्मनः ।
स्थूलदेहलयापेक्षा न स्वप्नेऽपि समुद्भवेत् ॥

४७. हठयोगबलात् स्थूलं प्रविभज्य विलापयेत् ।
क्रमेण तावता मुक्त्यै न विशेषोऽस्ति कश्चन ॥

४८. शुभाशुभानि कर्माणि जीवः सूक्ष्मशरीरतः ।
बिभर्ति तत्फलान्यस्माद् भुङ्क्ते स्थूलादने तथा ॥

४९. शुभानि काम्यकर्माणि पुण्यसंज्ञानि देहिनाम् ।
सुखं वैषयिकं भूरि जनयेयुरसंशयम् ॥

५०. अशुभानि च कर्माणि पापसंज्ञानि देहिनाम् ।
दुःखं नानाविधं भूरि जनयेयुरनर्गलम् ॥

५१. उभयेभ्यः पराणि स्युः निष्कामसुकृतानि तु ।
तानि मोक्षोपयुक्तानि प्रपद्यन्तेऽव्ययं विना ॥

५२. अनुद्दिश्य फलं लोके कर्म यत् कुरुते नरः ।

---

१.सव्यो-B.333

शुभं तदविनाश्येव जनयेद् भेदमात्मनः ॥

५४. दशेन्द्रियाणां व्यापारैरनुमेयं विपश्चितम् ।
चित्तं शुद्धमशुद्धं वा नान्यथा कल्पकोटिभिः ॥

५५. विषयेष्वेव सततं व्यापृतानीन्द्रियाणि चेत् ।
तच्चित्तं शुद्धमित्यत्र को वा ब्रूयात् सुसूक्ष्मधीः ॥

५६. अन्तर्गतमदृश्यं तद् अपि चित्तं बहिर्दृशा ।
इन्द्रियैस्त्यक्तविषये शुद्धं जानात्यसंशयम् ॥

५७. नवे विषयवैमुख्यमिन्द्रियाणां भविष्यति ।
मुख्यं कदापि चित्तस्य विना रोधं परात्मनि ॥

५८. सकृच्छ्रवणमात्रेण जाताद् बोधाद् विमुच्यते ।
इत्याहुः केचिदेषा तु न सद्योमुक्तिरुच्यते ॥

५९. उपेक्षमाणं ब्रह्मात्मध्यानयोगमसत्तमाः ।
पण्डितंमन्यमाना हि हृष्टास्ते बोधवादिनः ॥

६०. बुद्धा बौद्धसमाचारा वर्णाश्रमविवर्जिताः ।
अकर्तृत्वाभिमानेन न ध्यायति परं महः ॥

६१. वाक्यार्थश्रवणोत्पन्नब्रह्मात्मज्ञानवांस्ततः ।
मत्वा तदैक्यध्यानेन ब्रह्मणि स्थापयेन्मनः ॥

६२. एष हि ध्यानयोगः स्यात् सद्योमुक्त्यैकसाधनम् ।
बद्धस्य वा प्रबुद्धस्य सद्योमुक्तिर्न तद्विना ॥

६३. ब्रह्मात्मबोधहीनेन न ध्यानेन च किञ्चन ।
फलं विवक्षितं सिद्ध्येत् सद्योमुक्त्यात्मकं भुवि ॥

६४. उपदेशं परं लब्ध्वा गुरोस्तत्त्वमधीत्यथ (च?) ।

अहंब्रह्मास्मिवाक्यार्थमेकान्ते प्रविचारयेत् ॥

६५. देहेन्द्रियादिसक्षी यः परमात्मा महान् विभुः ।
आकाशवत् स एवैकः ब्रह्मशब्दार्थ इष्यते ॥

६६. तयोरत्रैक्यसिद्ध्यर्थं प्रत्यगात्मपरात्मनोः ।
अस्मीति प्रोच्यते सद्भिः सर्ववेदान्तपारगैः ॥

६७. एवं विज्ञाय वाक्यार्थमथ ब्रह्मणि निर्गुणे ।
निष्प्रपञ्चे परंज्योतिष्यात्मानं धारयेन्मुनिः ॥

६८. यदा प्रपञ्चरहितम् अखण्डं ब्रह्म भावयेत् ।
संप्रज्ञातसमाधिस्थः योगाभ्यासीति कथ्यते ॥

६९. अयमेव परब्रह्मोपासकश्च महामुनिः ।
शास्त्रोक्तैरितराभ्यासैः फलमस्ति न किञ्चन ॥

७०. समाधियोगाभ्यासस्तु सद्योमुक्त्यर्थको मतः ।
अस्मिन्नुपेक्षाबुद्धिस्तु सुधियां नोपजायते ॥

७१. ब्रह्म भावयतो नित्यम् एकान्ते नियमेन च ।
क्रमाद् भवेयुर्वश्याः स्वाः देहप्राणेन्द्रियादयः ॥

७२. अभ्यासः प्रकृतो हि स्यादुभयार्थप्रदः परः ।
ब्रह्मानुभूतिं देहादिपाटवं च तदर्थकम् ॥

७३. एतमर्थमविज्ञाय हठयोगेन दुर्मतिः ।
कायादिसिद्धये कालान् वृथा नयति हा ! भुवि ॥

७४. आरोग्यमप्यनालस्यम् अनिद्रा चेत्यमी त्रयः ।
ये य आवश्यका अस्य सिद्ध्येयुर्योगिनः स्वयम् ॥

७५. स्वानुभूत्युपयुक्तेऽस्मिन् सिद्धे धर्मत्रये स्वतः ।

हठयोगेन किं लोके फलं शाश्वतमाप्नुयात्? ॥

७६. कूटवच्छ्रवणादीनां त्यागो नात्र ह्यपेक्ष्यते ।
नियम्यते न चान्यच्च क्षीरभोजनमन्वहम् ॥

७७. योगिनोश्च द्वयोर्देहरोगाश्च द्विविधा अपि ।
अभिव्यक्ता विनश्यन्ति सद्यः कालक्रमेण च ॥

७८. औषधैरनिवर्त्या ये पूर्वकर्मफलात्मकाः ।
ते वा [१] अवश्यभोक्तव्या निवर्तन्ते क्रमेण हि ॥

७९. अन्ये त्वपथ्यजा रोगा निवर्त्या औषधैरिह ।
औषधाद्यनपेक्षं तु निवर्तन्ते क्षणात्तयोः ॥

८०. कुम्भकाप्लाविता नाड्यः शुद्ध्यन्ति हठयोगिनः ।
परब्रह्मामृतरसाप्लाविता स्वात्मयोगिनः ॥

८१. यदि ह्यारभते ब्रह्मध्यानयोगं महत्तरम् ।
तदाप्रभृति नाडीनां विशुद्धिरुपजायते ॥

८२. तथापि दीर्घायुष्यं तु न सिद्ध्येदात्मयोगिनः ।
श्वासा हि प्रविलीयन्ते नावशिष्यन्त एव तु ॥

८३. अवशेषयति श्वासान् प्रत्यहं नियतानपि ।
हठयोगी ततोऽस्य स्युरणिमाद्याश्च सिद्धयः ॥

८४. अखण्डे ब्रह्मणि स्थैर्यं यच्चित्तस्योपजायते ।
स योगी ब्रह्मनिर्वाणमत्यन्तसुखमश्नुते ॥

८५. अतः सर्वाणि कर्माणि सर्वज्ञानानि वै सुधीः ।
सर्वोपास्तीश्च संत्यज्य ब्रह्मोपास्तिं सदाऽऽचरेत् ॥

---

१.अत्र सन्धिर्न कृतः।

८६. आत्मनो देहयोगेन वन्धः सांसारिको मतः ।
तस्यैव ब्रह्मयोगेन मोक्षः कैवल्यसंज्ञितः ॥

८७. अनन्यवृत्तिमच्चित्तं ब्रह्मध्यानैकवृत्तिकम् ।
सद्योमुमुक्षोर्भवति दृढवैराग्यसंयुतम् ॥

८८. आनन्दानुभवार्थत्वात् समाधौ न श्रमः क्वचित् ।
अतः किमर्थं वैराग्यमित्याहुस्तदसंगतम् ॥

८९. युञ्जानमपि कर्षन्ति बलाद् विषयवासनाः ।
विषयेषु महश्चेत् स्यात् वैराग्यं स न कृष्यते ॥

९०. अतः परात्मज्ञानी वा तद्योगी वा महामतिः ।
सद्यः सुखप्रदं यत्नात् परं वैराग्यमाश्रयेत् ॥

९१. अब्भक्षा वायुभक्षा वा कन्दमूलफलाशिनः ।
न वैराग्यं परं प्राप्ताः तपस्वित्यादबोधतः ॥

९२. बोधहीनं न वैराग्यं शोभते कस्यचिद् भुवि ।
नच शास्त्रैश्च शिष्यैश्च श्लाघ्यते तद् विवेकिभिः ॥

९३. तस्माद् वैराग्यबोधाभ्यां संयुतो धीमतां वरः ।
बह्मात्मैक्यमहायोगं नियमेन समाचरेत् ॥

**इत्यप्पयदीक्षितेन्द्रान्वयजाप्पयदीक्षितकृतौ कैवल्यसाधनाख्यं प्रकरणं समाप्तम्।**



# अनुभूतिसूत्रम्

## संपादकीया पीठिका

अप्पय्यशिवाचार्यं तदीया रचनाश्च जिज्ञासुभिर्गुरुशिष्यसंवादस्य पीठिका द्रष्टव्या।

स्वतन्त्रं सूत्रप्रस्थानमारिप्सुनानेन अनुभूतिसूत्रनामकं यद् व्यरचि सूत्रवाङ्मयं तत्र चत्वारोऽध्यायाः, अष्टोत्तरशतमधिकरणानि, चतुश्चत्वारिंशदुत्तरचतुःशतं च सूत्राणि सन्ति।

"दशोपनिषन्न्यायनिर्णयाय प्रवृत्तेन बादरायणीयसूत्रजालेन- 1.'अष्टोत्तरशतोपनिषदां न्यायनिर्णयो न शक्यसंपादन' इति, 2.'प्रणवमात्राविभागादिदशोपनिषदतिरिक्तोपनिषत्प्रतिपादिता विषया न स्पृष्टा' इति, 3.'क्रममुक्तेः साधितत्वेऽपि जीवन्मुक्तिर्न साधिता' इति, 4.'तस्मान्नवीनसूत्रसमुच्चयरचनाया अनिवार्यता वर्तत'-इति" च प्रतिपाद्य नूतनसूत्ररचनां समर्थयत एषः।

धृतोपनिषदभिधाना बहवो नवीनाः कृतयः प्रसिद्धोपनिषद्गत-वाक्यशैल्यनुकरणेन वा तदनुकरणाभावेन वाऽऽविर्बभूवुरिति प्रसिद्धोऽयं विचारः। नवीनानाम् उपनिषदामेव सृष्टिर्यदि शक्या नवीनसूत्राणां रचना नातीव क्लशायेति अर्थाक्षिप्तमेव।

'गीताप्रवचन्' नाम्नि ग्रन्थे त्यत्र विनोबाभावे साम्यसूत्राख्यस्य सूत्रस्य रचनां कृतवान् यत्र १०८ अधिकरणानि ४३२ सूत्राणि च सन्ति। तथैव तत्रभवान् महामण्डलेश्वरः स्वामी वेदभारती स्वविरचिते "दिवो दुहिता" इति नाम्नि लघुकृतिसङ्ग्रहे हृषीकेशतः प्रकटिते 'अन्तः

संन्यस्तसूत्रम्'(सूत्रसंख्या ४३)''आशीःसूत्रम्''(सूत्रसंख्या ४३)''हठ-कुण्डलिनीसूत्रम्'' (सूत्रसंख्या १९) ''विराट्सूत्रम्'' (सू.सं.६६) ''विज्ञानसूत्रम्'' (सू.सं.८) इत्याख्येषु विभागेषु आहत्य १७९ सूत्राणि दत्तवान् ।

प्रतिपाद्यवस्तुनः संसूचनात् किल सूत्रत्वम्। सूचनं प्रतिपाद्यस्य केन्द्रं स्यात्, अर्धभागस्य स्यात्, प्रमाणवाक्यस्य वाऽपि स्यात्। भाष्यादिकाध्ययनानन्तरमेव सूत्रस्मरणे सूत्रसूचितविचाराणां सर्वेषाम् उपस्थितिर्भवेत्। व्याख्यादिकम् अवधीरय्य केवलं सूत्रस्य स्मरणे सर्वमपि सूत्रसूचितमर्थजातं स्मर्यत इति वक्तुं न शक्यते। सूत्ररचना परमाद्भुतां मेधामेव सदा प्रदर्शयतीति तु मुग्धानां वचनम्। कोऽपि लेखकः क्रियापदयोगतत्त्यागान्यतरयुक्त्याश्रयणेन निर्देष्टव्यस्य विचारस्य संक्षेपतः संसूचनपूर्वकं पदद्वन्द्वे त्र्यधिकपदेषु वा सूत्रत्वं (स्वस्मिन् सूत्रकारत्वं च)स्रष्टुं शक्नोत्येव! वेदान्तदेशिकस्य वचनान्यपि अत्र विषयेऽनुकूलानि[1]।

---

1.'' न च सूत्रनिबद्धं सर्वं विद्यास्थानमिति नियमो दृष्टः, न चैक एवैकस्य विद्यास्थानस्य सूत्रकृदित्यपि वा ऋषिरित्येव वा राजाज्ञा, अन्यैरपि च तत्करणदर्शनात्।' १.प्रमाणशब्दस्य भावे करणे च व्युत्पत्तिः।२.एवमत्र च प्रमैव प्रमाणमित्येके।३.प्रमाकरणमित्येवेत्यपरे।४.तयोरन्यतरदित्यन्ये।----- ४८.स्वव्यापिदूषणं जातिः।४९.कथकाशक्तिलिङ्गं निग्रहस्थानम्' इत्येतादृशानि वाक्यानि किं सूत्राणि न स्युः? तदिह संक्षिप्तं लक्षणादिवाक्यं सूत्रं तदुदाहरणवाक्यं तु भाष्यादिकमिति विभाव्य संतोष्टव्यम्।-----यथा लोकं यथावेदं लौकिके वैदिकेऽपि वा ।यो वक्ता स परिग्राह्यः प्राक्तनोऽद्यतनोऽपि वा। विवक्षितार्थावैशद्यं व्याकुलत्वमपूर्णता। उल्लोकतेत्यमी दोषा गुणकोटौ जडैः कृताः। तदर्वाग्भिस्तथाऽऽचार्यैर्यथेष्टं मतमास्थितैः। प्रणिन्ये वहुधा तैस्तैः प्रमाणादिविचारणा''।(न्यायपरिशुद्धिः प्रत्यक्षाध्याये प्रथममाह्निकम्। गौतमसूत्रबहिष्कारपक्षः।श्रीमद्वेदान्तदेशिकग्रन्थमाला-वेदान्तविभागे द्वितीयसंपुटम्-पृ.86)

शाङ्करमद्वैतं चिखण्डयिषुरयं "नवीनवादरायणः" शङ्कराचार्यीयान् सर्वान् आकरग्रन्थान् सम्यगध्यैष्ट वा, सदानन्दादिप्रणीतवेदान्तसारादिप्रकरणेषु कटाक्षपातेन तत्र वर्तमानान्येव वाक्यानि परिशुद्धशाङ्करसिद्धान्तप्रतिपादकत्वेन भ्राम्यन् अद्वैतोत्सारणाय रभसात् प्रावर्तिष्ट वेति पर्यनुयोगः सावसर एव। कस्मिंश्चन सूत्रे (3.3.24) त्रयाणामपि वेदान्तमतानां विषये स्वकीयामरुचिं प्रदर्शयत्येषः। तादृश्या अरुचेर्बीजं परिशुद्धवेदान्तानुगता युक्तय एव वाऽऽहोस्विदर्थानवबोधो वेति तु समग्रस्य "अनुभूतिमीमांसाभाष्य"नामकस्य अदसीयग्रन्थविशेषस्य प्रकटनानन्तरमेव निश्चेतव्यम्। परन्तु विषयेऽस्मिन् कश्चन विचारबिन्दुः सुधियां स्वान्तसरोजे निपत्यादित्याशासानोऽहं सूत्रग्रन्थस्य केवलस्य संपादनार्थं प्रावर्तिषि।

अनुभूतिसूत्रमिदं मैसूरवीयप्राच्यविद्यासंशोधनालयस्थितानां तिसृणां हस्तप्रतीनाम् अवलम्बनेन संपादितम्। हस्तप्रतीनाम् एतासां परिचयोऽधोदर्शितात् कोष्ठकाद् ज्ञेयः-

| | | | |
|---|---|---|---|
| **हस्तप्रत्यङ्कः................** | **B.333** | **B.331** | **B.168** |
| **लेख्यसामग्री..............** | कागदम् | कागदम् | कागदम् |
| **संज्ञा...................** | ग्रं. | ते. | भा. |
| **लिपिः..................** | ग्रन्थ | तेलुगु | ग्रन्थ |
| **मापनम्...............** | 10X16.5 से.मी. | 14.5X17.5 से.मी. | 27.5X19.5 से.मी. |
| **पुटसंख्या..................** | 1-40 | 1-71 | 1-334 |
| **प्रतिपुटं पङ्क्तिसंख्या...** | 18 | 12 | 45 |
| **प्रतिपङ्क्ति अक्षरसंख्या** | 11 | 8 | 30 |

ते. ग्रं. प्रत्योः केवलं सूत्रपाठोऽस्ति । अधिकरणसंख्यास्तु यद्यपि दत्ताः, परन्तु अधिकरणनामानि न लिखितानि। भा. प्रत्यां भाष्यमपि समग्रं वर्तते अधिकरणनामान्यपि दत्तानि।

ते.ग्रं.प्रत्योर्द्वयोरपि प्रत्यध्यायसमाप्ति तदध्यायादिमसूत्रस्य प्रथमः शब्दः, अधिकरणसंख्या,तथा सूत्रसंख्या च दत्ताः। इयं पद्धतिः किल प्राचीना। प्रतिविभागं तत्तदध्यायगतकतिपयप्रतीकशब्दस्मरणेन समग्रस्यापि अध्यायस्य खण्डस्य वा झटित्युपस्थितये पद्धतिरियमनुकूला। वेदेषु अष्टाध्याय्यां गृह्यसूत्रेषु श्रौतसूत्रेषु च पारायणपरिपाट्यां दृश्यते पद्धतिरियम्[1]।

**शुद्ध्यशुद्धिविचारः**: ते.ग्रं. प्रत्योर्द्वयोरपि लिपिकरकृताः प्रामादिकाः पाठा गोचरीभवन्ति। ते यथामति शोधिताः। प्रामादिकाः पाठाः शोधिताश्च पाठा अधो दत्तात् कोष्ठकाद् ज्ञेयाः -

| स्थलम् | मातृकापाठः | स्वीकृतः / शोधितः पाठः |
|---|---|---|
| पीठिका | पराहद्यसु-ते | वराहाद्यास्तु |
| पीठिका | सिध्यति-ते | सिध्यन्ति |
| 1.1.11 | आद्र-ग्रं | आर्द्र |
| 1.1.17 | विध्यादि-ते | विद्धादि |
| 1.1.19 | व्युपदेश-ते | व्यपदेश |
| 1.1.21 | सूयते-ग्रं | श्रूयते |
| 1.1.21 | काद्यापेतं-ग्रं, ते. | काम्यापेतं |

1.वैदिकमण्डल्यां पद्धतिरियं शृङ्खला इत्यभिधीयत इति, कन्नडभाषायां त्वस्याः पद्धतेः चिट्ठ इति कवलुचिट्ठ इति वा नामधेयमिति मह्यं ज्ञापितवतोः पुणे-स्थ-वैदिकमण्डल्यां संशोधकयोस्तत्रभवतोः डा.भाग्यश्री-डा.परशुरामपराञ्जपे-कयोरहमस्म्यधमर्णः।

| | | |
|---|---|---|
| 1.2.27 | निषे वा च-ग्रं | निषेधाच्च |
| 1.2.39 | कलम्भात्-ते | कुम्भात् |
| 1.2.43 | सर्वेच्छत्वं-ग्रं | सर्वेच्छुत्वं |
| 1.2.44 | व्यक्ते-ते | व्यक्ति |
| 1.2.48 | विषकत्वाच्च-ते | विषयत्वाच्च |
| 1.2.49 | अनुभवान्नत्व-ग्रं,ते | अनुभवान्तत्व |
| 1.3.22 | तृप्तेस्त्वप्रतीत्यैव-ग्रं | तृप्तिस्त्वप्रतीत्यैव |
| 1.3.30 | निगुणत्वात्-ते | निर्गुणत्वात् |
| 1.4.4 | उपेया-ते | उपादेया |
| 1.4.7 | एकं देश-ग्रं | एकदेशा |
| 1.4.26 | जील-ग्रं | जीव |
| 2.1.22 | ग्रहण-ते | गृहिण |
| 2.1.30 | विवक्षेत-ते | विवक्षित |
| 2.2.1 | कार्यविलेपो | कार्यविलापो |
| 2.2.8 | वरिष्ठाश्च-ग्रं | वरिष्ठाच्च |
| 2.2.15 | क्षयशब्दात्-ते | क्षयश्शब्दात् |
| 2.3.3 | च्छित्तेश्च-ते | च्छक्तेश्च |
| 3.2.18 | मनुष्यत्वाचार्यो-ते | मनुष्यस्त्वाचार्यो |
| 3.2.21 | चेवं-ते | चैवं |
| 3.2.22 | त्रेविध्या-ते | त्रैविध्य |
| 3.2.24 | हरत्वात्-ते | परत्वात् |
| 3.2.27 | अनवधानवदिति-ग्रं. | अवधानवदिति |
| 3.3.5 | पुरुकार-ते | पुरुषकार |
| 4.3.1 | विशेषे -ते | विशेषा |
| 4.4.4 | प्रज्ञाहानि-ते | प्रतिज्ञाहानि |

एतेन कोष्ठकेन ते. प्रतेः प्रामादिकपाठाधिक्यवत्त्वं स्पष्टभूयिष्ठम्।

**अधिकपाठविचारः**-पीठिकायां प्रथमप्रघट्टकानन्तरं "तेनैवान्यत्र चैवमुक्तम्"इत्यारभ्य पीठिकान्तं यावन्नवीनसूत्ररचनावश्यकताप्रतिपादनपरः सुदीर्घो भागः केवलं ते. प्रतौ दृश्यते।स भागो भाष्ये तु नास्त्येव। अर्थान्न स भागो भाष्यादुद्धृतः।अस्माकमत्रेत्थं प्रतिभातिसूत्ररचनानिवार्यतां वाचकेभ्यो ज्ञापयन्त्याः पीठिकाया रचनाऽत्यन्तमावश्यकी इति मन्वानेन स्वयं ग्रन्थकर्त्रैव द्वितीयवारं कृतायां (कारितायाम्?) सूत्रपाठप्रत्यां स भागो योजितः।

1.4.8. संख्याङ्कितसूत्रानन्तरं ग्रं. प्रतौ "कारणं तु पुरुषः कर्मबीजत्वादुत्पत्त्यनुपरोध" इत्येकमधिकं सूत्रं टिप्पणीरूपेण दत्तं, 8A इति च संख्याङ्कनं कृतम्। एतस्यापि ग्रन्थकर्तृरचितत्वमेव, न प्रक्षिप्तत्वं, सूत्रस्यास्य भाष्योपलब्धेः।

**पाठान्तरविचारः**- 1. 3. 15 ; 1.4.22- केवलं द्वयोरेतयोः सूत्रयोः पाठव्यत्ययो दृश्यते :-

| | | |
|---|---|---|
| 1.3.15 | शक्तेः पातात्-ते. | शक्तिपातात्-ग्रं. |
| 1.4.22 | यत्न-ते. | प्रयत्न-ग्रं. |

उभयत्र ग्रं.प्रतेः पाठ आदृतो भाष्यानुसारित्वात्।

2.4.17 ग्रं.प्रतौ 'सर्वत्र वा ' इत्यत्र प्रान्तभागे(margin) 'सर्वशब्दस्य'इति टिप्पणीरूपेण लिखित्वा तदुद्धारपूर्वकं पुनः ' सर्वत्र वा' इत्युल्लिखितं दृश्यते।

**ग्रन्थसंपादनम्**-ग्रन्थसंपादनसमये भा.प्रतिगतसूत्रपाठेन तुलनां कृत्वा शोधितः पाठो दत्तः।अधिकरणनामानि भा.प्रतिस्थानि च दत्तानि।

~~*✱*~~

# अनुभूतिसूत्रम्-ग्रन्थकर्त्रीया पीठिका

इह ताम्रपर्णीतीरनिवासिना श्रीमदप्पयदीक्षितेन्द्रान्वयोद्धृतेनाप्पयदीक्षितेन विरचितम् अष्टोत्तरशतोपनिषन्मीमांसार्थकमिदमनुभूतिसूत्रं मुक्तिकोपनिषदुक्तश्रीरामचन्द्रवचनानुरोधेन विदेहमुक्तिमुख्यसाधनं सर्वविद्वच्छिरोभूषणं विजयते। एतत्सूत्रप्रकारेणैव चैतत् सूत्रभाष्यमनुभूतिमीमांसाख्यं विरचितम्।

[[1]'तेनैवात्र चैवमुक्तम्-

अत्र खलु श्रीमत्सद्गुरुकटाक्षवीक्षणोदितस्वात्मबोधद्वारा वाक्यार्थमनननिदिध्यासनाभ्यां संशयविपर्ययासौ निरस्य साक्षात्कृतात्मतत्त्वेन श्रीमदप्पयदीक्षितेन्द्रान्वयजेनाप्पयदीक्षितेन मया चतुश्चत्वारिंशदुत्तरचतुश्शतसूत्रगर्भिताष्टोत्तरशताधिकरणवच्छोडशपादालङ्कृताऽध्यायचतुष्टयवदनुभूतिसूत्रम् "अथात आत्मदिदृक्षा" (1.1.1) इत्यादिकं सभाष्यमारचितम्।

एतद्विरचनमावश्यकमनावश्यकं वेति विचार्यते। अनावश्यकमिति तावत् प्राप्तम्। कुतः? तर्कसूत्रस्य गौतमेनेव शब्दसूत्रस्य पाणिनिनेव मीमांसासूत्रस्य जैमिनिनेव वेदान्तसूत्रस्य च व्यासेन[2] विरचिततया शास्त्रस्य चारितार्थ्यात्। भगवान् व्यासाचार्यो "ह्यथातो ब्रह्मजिज्ञासे"(1.1.1) त्युपक्रम्य "तत्तु समन्वया"(1.1.4)दिति "गतिसामान्या"(1.1.10) दिति "सर्वत्र प्रसिद्धोपदेशादि."(1.2.1)ति "सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषादि"(3.3.1)ति चैवमादिसूत्रैः सर्वानपि वेदान्तान् विचारयामासेति गम्यते। यदि तेन वेदान्तविचारः सावशेषः कृतः स्यात्ततः सूत्रान्तरविरचनं युक्तम्। न तु तदस्ति। तस्मात्

1.इत ऊर्ध्वं समाप्तिपर्यन्तं कुण्डलितो भागो ग्रं.प्रतौ नास्ति।

2.'जैमिनिनेव च वेदान्तसूत्रस्य व्यासेन' इति मातृका।

सूत्रान्तरविरचनमनावश्यकमिति प्राप्ते-

ब्रूमः- आवश्यकमेवेति। कुतः ? सावशेषस्यैव वेदान्तविचारस्य तेन कृतत्वात्। समन्वयादिसूत्रैर्हीशावास्यादिदशोपनिषदः केवलं विचारिता भवन्ति न त्वष्टोत्तरशतोपनिषदो द्वात्रिंशदुपनिषदो वा। यद्यपि द्वात्रिंशदुपनिषदन्तर्गते कौषीतकीबृहज्जाबालोपनिषदौ "वाक्यान्वयाद्" (1.4.19) "आमनन्ति चैनमस्मिन् "(1.2.32)इत्याभ्यां सूत्राभ्यां विचारिते भवतः। नहि तेन विचारेण शास्त्रस्य चारितार्थ्यं सिद्ध्यति। अथर्वशिरोऽथर्वशिखाप्रभृतीनामुपनिषदामेव षोडशप्रणवमात्रात्मकषोडशब्रह्मप्रतिपादकत्वेन रहस्यार्थबवोधयितृत्वात्। दशोपनिषदन्तर्गतमाण्डूक्योपनिषदोऽपि चतुर्मात्रात्मकप्रणवनिरूपणपराया विषयीकृतत्वाभावे किं पुनरितरासाम् ?

व्यासाचार्येण प्राधान्येन ब्रह्मसूत्रेषु विषयीकृता दशोपनिषदस्तु सामान्यापरोक्षज्ञानजनकाः क्रममुक्तिमात्रप्रयोजना इति श्रीरामचन्द्रवाक्यैरवगम्यते।

तथाहि-अष्टोत्तरशततमायां मुक्तिकोपनिषदि श्रीरामचन्द्रो हनुमते प्रोवाच-

"माण्डूक्यमेवालं मुमुक्षूणां विमुक्तये। तत्राप्यसिद्धं चेद् ज्ञानं दशोपनिषदं पठ। ज्ञानं लब्ध्वाऽचिरादेव मामकं धाम यास्यसि। द्वात्रिंशाख्योपनिषदं समभ्यस्य निवर्तय। विदेहमुक्ताविच्छा चेदष्टोत्तरशतं पठ।" इति।

अत्र दशोपनिषत्संख्याकानां नवोपनिषदां सामान्यपरोक्षज्ञानहेतुत्वं माण्डूक्यस्य विशेषपरोक्षज्ञानहेतुत्वं द्वात्रिंशोपनिषत्संज्ञकानां द्वाविंशत्युपनिषदां विज्ञानाख्यतापरोक्ष-ज्ञानलक्षणजीवन्मुक्तिहेतुत्वम्

अष्टोत्तरशतसंज्ञकानां षट्सप्तत्युपनिषदां विदेहमुक्तिहेतुत्वं च स्फुटमवगम्यमानं व्याख्यातं च तद्भाष्यादिषु। अत्रैवंसति विदेहमुक्तिजनकाष्टोत्तरशतोपनिषन्मीमांसार्थकं सूत्रान्तरमवश्यं रचयितव्यम्। नच दशोपनिषद्यनुक्ता विशेषरहस्यार्था अष्टोत्तरशते क्वचिदपि नोक्ता इति वाच्यम्। नारदपरिव्राजकवराहाद्यासु बह्वीषूपनिषत्सु दशोपनिषदनुक्तानाम् अष्टाविंशत्युत्तर-शतप्रणवमात्राविभागः,सप्तभूमिकानिरूपणं, जीवन्मुक्तविदेहमुक्तलक्षणनिरूपणं, षड्विधसमाधिलक्षणनिरूपणं, जाग्रद्विश्वादिषोडशजीवभेदप्रदर्शनमित्येवज्जातीयकानां बहुविशेषार्थानां विदेहमुक्तिमुख्यसाधनत्वेन प्रपञ्चितानां विशेषरहस्यार्थानां परिदृश्यमानत्वात्।

तर्हि- अष्टोत्तरशतमीमांसार्थं सूत्रान्तरविरचनस्यावश्यकत्वमिव द्वात्रिंशोपनिषन्मीमासार्थं तृतीयं किञ्चन सूत्रं विरचयितव्यमिति चेन्न, प्रकृतानुभूतिसूत्रैरेव सर्वासामुपनिषदां मीमांसितत्वात्। क्रममुक्तिजीवन्मुक्तिविदेहमुक्तयो ह्यनयाऽनुभूतिमीमांसया सिध्यन्ति। व्यासप्रोक्तब्रह्ममीमांसया तु दशोपनिषन्मात्रप्रधानत्वात् क्रममुक्तिः केवलं सिध्यतीत्यवोचाम। व्याससूत्रोपसंहारलिङ्गेन च ब्रह्मलोकं गतस्य पुनराकृतिप्रतिषेधेन क्रममुक्तिमात्रप्रयोजनत्वमवगम्यते।

तस्मात् क्रममुक्तिजीवन्मुक्तिविदेहमुक्तिप्रयोजकं व्याससूत्रेतरत् सूत्रं विरचयितव्यमेवेति सिद्धम्।

ननु च परमर्षीणामेव सूत्रविरचनाधिकारः स्यान्न तु मनुष्याणामिति केचिदाशङ्केरन्। तच्चानुपपन्नम्। तथा ह्याह पराशरः- "श्रुतिनिर्णायिकन्यायकलापं मुनिपुङ्गव। सूत्रार्थं भाष्यरूपेण कुर्वन्त्येव मुनीश्वर।"इत्याह। अतः शिवप्रसादवतां सर्वाधिकारसिद्धिरिति सर्वमनवद्यम्।]

# अनुभूतिसूत्रम्।

[“शंन्नो मित्र”इत्यादिशान्तिपाठः, दक्षिणामूर्तिवन्दनादयश्च विहिताः।]

## अथ प्रथमाध्यायस्य प्रथमः पादः

**1. दिदृक्षाधिकरणम्।**

1. ॐ अथात आत्मदिदृक्षा।

2. सत्याद्यात्मक एषः।

**2.परप्रेमास्पदाधिकरणम्।**

3. परप्रेमास्पदत्वात्।

4.प्रमाणानुसारात्।

**3.विज्ञात्रधिकरणम्।**

5. विज्ञाता चाकरणत्वात्।

6. आश्रयत्वात्तु सूत्रवत्।

7. द्रष्टा यच्चात्मसाक्षी।

8. कारणत्वात्तु बृहतिबृंहयति।

9.दर्शनात्।

**4.वासनामयाधिकरणम्।**

10.वासनामयोऽभ्यासात्।

11.आर्द्रमभिनिष्पन्नज्योतिरिह स्वरूपत्वात्।

12.गोचर एकात्मवृत्तेश्च।

13. अप्रमेयोऽपि तु शास्त्रादेव प्रमितः।

14.चतुर्थः प्रत्ययरूपत्वात्।

15.अनालिप्तः पद्मपत्रवत्।

5.अविनाश्यधिकरणम्।

16.अविनाशी न विशेषात्।

17.दृश्यानुविद्धादिगम्यः।

18.अष्टाङ्गतस्तु दर्शनात्।

19.नानाव्यपदेशश्च भूमिविशेषाधिगमात्।

20.वार्तिकस्तु विभागश्रवणात्।

6. काम्यापेताधिकरणम्।

21.काम्यापेतं हि निःश्रेयसं श्रूयते।

22.अविशेषश्रुतेश्च।

23.अनन्तावयवो ह्युपपत्तेः।

'अथ'-षट्-त्रयोविंशतिः

इति प्रथमाध्यायस्य प्रथमः पादः

अथ प्रथमाध्यायस्य द्वितीयः पादः

7.ज्ञानाद्यधिकरणम्।

1.ॐ ज्ञानाद्यैस्त्वागत्यादिप्रतिषेधः।

2.शास्त्रेणावगतत्वात्।

3.तुर्यादिचतुष्टयभेदाच्च।

4.आरब्धभेदस्तु संचितानुरोधी।

5.अनन्यभोजित्वात् पैप्पलादः।

6.कार्यसमर्थत्वाद् बीजवत्।

7.पटवच्च।

**8.अनारब्धाधिकरणम्।**

8.अनात्मवित्तापत्तेर्नारब्धम्।

9. सप्तमशिशुवत् प्रियाद्यपहतेः।

10. न त्वसदुपपत्तिः।

**9.सर्वातीताधिकरणम्।**

11.सर्वातीतत्वाच्च तच्छ्रुतेः।

12. भावमिव दत्तात्रेयः।

13. ऐन्द्रादीनि त्वाधिकारिकत्वात्।

14. सर्वत्रानुज्ञापरिहाराभाव इत्येके।

15. सर्वव्यापारोपरमं तु नारदीयात्।

16. अध्यासमूलत्वात्।

17. न कामयते श्रुतेश्च।

18. आरम्भमात्रावसानाः।

19. अनवद्यो हि पावनचारित्र्यात्।

**10.जीवन्मुक्ताधिकरणम्।**

20.जीवन्मुक्ता हि संवर्तकाद्याः।

21. मुक्तयस्तु पितामहोक्तेः सारस्वताच्च।

22. सूक्तेन चैवमुपपद्यते।

23. व्यतिरेकात्तु केवलानन्दघनो नेति नेतीति।

**11.वाङ्नियमाधिकरणम्।**

24.आत्मनि वागादीनि यच्छेत्।

25. अभ्यासाभ्यासो हि तद्दर्शनात्।

26. प्रत्ययप्रवाहाच्च।

27. विविक्तनिषेधाच्चासकृदावृत्त्यावृत्तेः।

28.अचञ्चलो नु रसावेशत एको दीपवत्।

29.समाधयश्च दर्शनात्।

**12.षण्णवत्यधिकरणम्।**

30.षण्णवत्यप्ययः पूर्वमेवाचार्यलाभात्।

31.हेयास्तु गौणत्वात् सालोक्याद्याः।

32. केचिदुपादेयेति सायुज्याख्योपपद्यते तु स्वयं कैवल्यसिद्धेः।

33. स्थानविशेषाधिगमात्।

34. व्यष्टित्वान्नैवमिति चेन्नात्रापि तच्छ्रुतेः।

**13.शरीराधिकरणम्।**

35.शरीरत्वाय ह्यशक्तः कल्पते।

36.काममोचनाद् दर्शनाद् वा ऽमृतमोचने।

37.समकालनाशक्षयोदयेभ्योऽन्यथा तदुपपत्तेः।

38. अन्यत्र तच्छ्रुतेश्चैवमन्यथा यद्यनिर्मोक्षप्रसंगः।

39. प्राणनिरोधश्च बाह्यकुम्भात्।

40.आन्तरश्चैश्वर्यसंभवादुपपद्यत इति चेन्न,विघ्नरूपत्वात्।

41.प्रतियोगित्वात् सामानाधिकरण्यानुपपत्तेर्नेच्छानिच्छयोः।

42.द्रव्याद्यैः साधयत्यल्पबुद्धिः।

**14.अकामहताधिकरणम्।**

43.अकामहतत्वादसर्वेच्छुत्वमिति चेन्न,वृत्तीच्छोपपत्तेः।

44. चिदभिव्यक्तियोग्यत्वाद् वृत्तेर्न जाड्यप्रसंगः।

45. दर्पणवत्।

46. मोक्षहेतुत्वाच्च।

**15.चिद्वृत्त्यधिकरणम्।**

47.चिद्वृत्तिः प्रज्ञारूपत्वात् तच्छ्रुतेः।

48. स्वानुभूतिविषयत्वाच्च।

49. इतरेतराश्रयत्वदोषप्रसंग इति चेन्नानुभवान्तत्वोपपत्तेः।

50. गौणेऽप्येवमि [ति चे] न्न साक्षादनुभवानुपपत्तेः।

**'ज्ञान'-[अष्ट]-पञ्चाशत्।**

**इति प्रथमाध्यायस्य द्वितीयः पादः**

**अथ प्रथमाध्यायस्य तृतीयः पादः**

**16.यावत्यधिकरणम्।**

1.ॐ यावत्यपेक्षा हि सर्वत्रोपादानवत्।

2. विवेकाद्युपयोगात्।

3. एकमात्रा चतुर्मात्रा च दशके।

4. अष्टमात्राष्षोडशमात्राश्च द्वात्रिंशति।

5. चतुष्षष्टिमात्रा अष्टाविंशत्युत्तरमात्राश्चाष्टोत्तरे।

6. अधिकारिभेदात्।

**17.शुभनियमाधिकरणम् ।**

7.शुभस्य नियमोऽवगतिपर्यन्तत्वाद्यवघातवत्।

8.सत्यसत्याभावेऽपि दुःखमाभाससत्यात्।

9. कर्त्रात्मभिश्चाविशेषात्।

10.अत एव समाधयः।

11.चोदनाश्च।

18.उभयमीमांसाधिकरणम्।

12.उभयथा च जैमिनिर्वादरायणानुकूलः शास्त्रात्।

13.अनुज्ञापरिहाराभावस्यान्यार्थत्वात्।

14.बद्धस्येव दुःखमिति चेन्न पूर्णानन्दरूपत्वाच्छ्रुतेश्च ।

19.ग्रन्थित्रुटनाधिकरणम्।

15.त्रुट्यन्ति हि सर्वे ग्रन्थयः शक्तिपातात्।

16.देहपाताच्च।

17.आरब्धद्वितीया तु निष्ठा।

18.श्रुतेश्च।

19.उपाधिनिर्मुक्तश्रुतिविरोधप्रसंग इति चेन्न देहद्वयस्योपपत्तेः।

20.द्वात्रिंशत्तु दर्शनानन्तरसाध्याः।

20.द्वैविध्याधिकरणम्।

21.द्वैविध्यदोषप्रसंग इति चेन्न, लक्ष्यार्थत्वात्।

22.तृप्तिस्त्वप्रतीत्यैव निरङ्कुशा।

23.असंपन्नसंस्कारत्वादवद्य इति चेन्नाविरोधात्।

24.कारणत्वे ह्यविज्ञेयताप्रसंगः।

25.पूर्णत्वं च महत्त्वव्यपदेशात्।

26.विधाता हि गौण इति चेन्न,सांख्ययोगाधिगम्यत्वात्।

**21.प्रागीश्वराधिकरणम्।**

27.प्राक् तु विवेकादीश्वरः।

28.कार्यानित्यबुद्धिरूपत्वाद्विवेकस्य गौण उपास्य इति चेन्न, कारण-गोचरत्वात्।

29. कामहतकोपास्यत्वाच्च।

30.पुरुषस्य तु वीतवृत्तेर्निर्गुणत्वात्।

**22.मोक्षकल्पनाधिकरणम्।**

31.मोक्षस्य कल्पितत्वमुपपद्यते हि तच्छ्रुतेः।

32. आरब्धापेक्षया तु वास्तवो मोक्षः।

33. अमृतत्वाच्च।

'यावति'- सप्त-त्रयस्त्रिंशत्।

**इति प्रथमाध्यायस्य तृतीयः पादः।**

**अथ प्रथमाध्यायस्य चतुर्थः पादः।**

**23.ईक्षणाद्यधिकरणम्।**

1.ॐ ईक्षणादिविचारः परोक्षोपयोगात्।

2. जाग्रदादिं विना साक्षात्कृत्यनुपपत्तेः।

3. हेयाश्च सत्यकामादयो जिज्ञासादयो जिज्ञासाविरोधात्।

4. उपादेयास्त्वात्मतया सत्यादय उपास्यत्वात्।

5. उपासकानेकत्वव्यपदेशादुपास्ये च तदुपपद्यते।

6. अन्यथाऽनिर्मोक्षप्रसंगात्।

**24.साङ्ख्याधिकरणम्।**

7.सांख्यस्त्वेकदेशाविरोधात्।

8. ब्रह्मवादिनैवमात्मसामीप्यादल्पभेदः।

[8A.कारणं तु पुरुषः कर्मबीजत्वादुत्पत्त्यनुपरोधः।][1]

9. व्रीह्यादिवदुपपत्तेः।

10. स्वकरणत्वादन्यत्र पुरुष इति व्यपदिष्टोक्तेः।

**25.स्वकारणत्वाद्यधिकरणम्।**

11.एकनेमित्वादीनि तु निर्गुणत्वाविरोधात्।

12. ऐक्यार्थत्वादपरयोः पृथक्कृतत्वात्तु प्रकरणस्य।

13. माया चाविद्या चेत्यनुरोधेन सामञ्जस्यात्।

14. दर्शयति च।

**26.प्रकृत उपास्यपुरुषाद्यधिकरणम्।**

15.प्रकृत उपास्यः पुरुषो हि षोडशान्तरत्वात्।

16. अनन्तश्चात्मा विश्वरूपत्वात्।

17. सम्यग्ज्ञानान्ता तु द्वात्रिंशच्चतुष्षष्टिविभागाश्रवणात्।

18. साम्यहेतुत्वाच्च सैन्धववत्।

19. श्रुतस्य वाङ्मात्रत्वादफलत्वाच्चास्वादनवत्।

20.उपरमाद्यनुपपत्तेश्च।

**27.आत्मयोगाद्यधिकरणम्।**

21.आत्मयोगोऽप्रतिषेध्यः प्रस्तुतनिवर्तकत्वात्।

22. पुरुषप्रयत्नसाध्यत्वान्न प्रसादकर्मकालाः।

---

1.एतत् सूत्रमधिकं ग्रं.प्रतौ।

23.निदिध्यासनयोगी वरीयान्।

24. ?त्तरस्तु योगो ज्ञानस्य पूर्वकालीनत्वात्।

25. प्रत्याख्यानं तु सगुणत्वात्।

28.?वपरामर्शाद्यधिकरणम्।

26.जीवपरामर्शापेक्षो हि वाक्यार्थः।

27. उत्तमत्वाच्च।

28.वाक्यविरोध इति चेन्न,प्रत्ययोपन्यासान्मोक्षोपपत्तेः।

29. शोधितार्थत्वान्न वाक्यस्यानुसर्तव्यतोपपद्यते।

30. द्वात्रिंशदर्था द्वात्रिंशदर्थाः।

'ईक्षण'-षट्[1]-त्रिंशत्[2]

**इति प्रथमाध्यायस्य चतुर्थः पादः**

**अथ द्वितीयाध्यायस्य प्रथमः पादः**

**29.अपरोक्षाधिकरणम्।**

1.ॐ अपरोक्षार्थमिति चेन्न कारणत्वाभ्युपगमात्।

2.अद्वैतमात्रस्याभिप्रेतत्वावगमाच्च।

3. आत्मैकत्वबुध्येति चेदेवमप्यनिर्मोक्षप्रसङ्ग उपन्यासाभावाच्च।

4. भेदत्रयाविवरणाच्च।

**30.सुषिराधिकरणम्।**

5.सुषिरवदुभयथोपपत्तेः।

---

1.षडेक- ग्रं.।

2.ग्र.प्रतौ इङ्ग्लीष्भाषायां टिप्पणी -**With 8A, sūtras 31**

6. अनेकानि च युक्तेः सामञ्जस्यात्।

7. वृत्तिविकारत्वात् सत्याद्यनुपपत्तिरिति चेदनवद्यानि स्फूर्तिसंभवात्।

8. ज्ञानानन्यत्वाद् ब्रह्मण्यनेकानि।

9. सर्वत्रेति चेन्नान्येषामीश्वराधीनत्वात्।

10.श्रुतेश्च।

**31.अप्रतिष्ठानाधिकरणम्।**

11.अप्रतिष्ठानेऽपि श्रुत्यनुकूला यद्यपेक्षितव्या हि गौतमी।

12. स्वतोऽनुपयोगादानर्थक्याच्च।

13. शब्दसौष्ठवमात्रे तु पाणिनीयम्।

14. अनभिसन्धौ तु जैमिनीयं शुद्धिहेतोः।

**32.मोक्षफलाधिकरणम्।**

15.मोक्षफलत्वाद् वैयासिकमुभयथाऽनुपपत्तेः।

16. मोक्षवैषम्यमिति चेन्न, साम्यात्।

17. तद्विद्यपि कर्मयोगाज्ज्योतिरिह संपन्नम्।

18. आरब्धगतिदर्शनाद्धि ज्ञोऽपि तु मोदते।

19. कामादयस्तु गार्हस्थ्यात्।

20.आश्रमसिध्यै विहितेतरानपेक्षो हि विद्वान्।

21. उत्तरपूर्वामयनिबर्हणार्थकमगस्त्योक्तं च दृष्टफलत्वात्।

**33.उभयत्र वैराग्याधिकरणम्।**

22.उभयत्र वैराग्यस्य वैविध्याद् गृहिण उपपद्यते।

23. असंभवमिति चेन्न तच्छ्रुतेः।

24. स्मृत्यनुवादान्मोक्षप्रसंगः।

**34.निरोधनाधिकरणम्।**

‘ 25.निरोधनं हि भेषजं संसरणाख्यान्तरूष्मणः।

26. आत्मनिरोधेऽप्यायासोपपत्तेः।

27. चित्तजये च युक्तयः श्रूयन्ते।

28. वासनाक्षये च. मोक्षव्यपदेशात्।

29. श्रवणमात्रेण सम्यगालोकनासिद्धेः।

30.विवक्षितक्रमविपर्यासान्याय्यात्।

31.चोद्यावबोध्यभेदाद्दर्शनस्यान्यार्थत्वाच्च क्रम उपपद्यते।

**35.सम्यग्दर्शनाधिकरणम्।**

32.सम्यग्दर्शनार्थोपासने त्वङ्गाङ्गित्वोपपत्तेः।

33.साध्यनिर्देशाभावप्रसंग इति चेन्नात्मशब्दात्।

34.व्यतिक्रम इति चेन्न, सर्वेषामेतदवधेः प्रकरणात्।

35.आकाशादिवत् क्रमनियमोपपत्तेः।

‘अपरोक्ष’-सप्त-पञ्चत्रिंशत्।

**इति द्वितीयाध्यायस्य प्रथमः पादः**

**अथ द्वितीयाध्यायस्य द्वितीयः पादः**

**36.कार्यविलापाधिकरणम्।**

1.ॐ कार्यविलापो ह्यादौ तच्छ्रुतेः।

2. श्रवणसमाधिनिवर्त्यत्वादज्ञानयोर्द्वैविध्यम्।

3. इतरयोश्च।

4. श्रुतेश्चावगमात्।

**37.ब्रह्मविदधिकरणम्**

5.ब्रह्मविदो हि साधकाश्शान्तविक्षेपत्वात्।

6. श्रुतार्थानां तु परतरतमानीतत्वात्।

7. वरीयांश्च मतार्थत्वात्।

8. निदिध्यासितार्थत्वाद्वरिष्ठाश्च।

9. समाहितास्तु सप्रतियोगिकब्रह्मणि तद्दर्शनात्।

10.अन्यद्धि तदशब्दत्वादगोचरञ्च शब्दात्।

11.तदनन्यत्वं जीवन्मुक्तानुभवादिभ्यः।

**38.संप्रदायाधिकरणम्।**

12.संप्रदायविरोधप्रसंग इति चेन्नान्यसंप्रदायविरोधप्रसंगात्।

13. चिदेकव्यवस्थितेस्तु सम्यग्दर्शनान्तत्वात्।

14. अन्यस्य अनुपास्यत्वप्रसंग इति चेन्नोभयसाधारण्योपपत्तेः।

**39.तदन्तराधिकरणम्।**

15.तदन्तरोदये ह्यैहिकवासनाक्षयश्शब्दात्।

16.विलयान्तसंभवात्।

17. असंगस्य वैलक्षण्यं तु तद्दर्शनात् ।

18. स्मृतेश्च।

**40.शान्तकलनाधिकरणम्।**

19.शान्तकलना तु चैत्यांशहीनत्वात्।

20.तुर्यातीतमनानन्दपदत्वात्।

21. क्रमस्यार्थवत्त्वमुत्तरेभ्यः।

**41.साम्यावस्थाधिकरणम्।**

22.साम्यावस्थो हि तत्तदाचारानुसारित्वात्।

23. प्रोद्धरन्तीति चेन्न नष्टमनस्कत्वात्।

24. उत्तमस्तु विषदूषितं न जरयति।

25. कैवल्ये तु वासनादिशेषबाधस्तद्दर्शनात्।

**42.दहनाधिकरणम्।**

26.दह्यते तु सोऽग्निसंवन्धेऽप्यभाक्तत्वात्।

27.अग्निदाहाचलता हि समाधिकाल उपपद्यते।

28. स एवानन्तरकल्प इति चेन्नाधिकारिकत्वात्।

29. रामादयश्च तथा।

'कार्य'-सप्त - एकोनत्रिंशत्।

**इति द्वितीयाध्यायस्य द्वितीयः पादः**

**अथ द्वितीयाध्यायस्य तृतीयः पादः**

**43.संपन्नाधिकरणम्।**

1. ॐ संपन्नार्थसंस्कारो हि योगी दावदग्धः।

2.शिखिध्वजस्य तु विरक्तत्वादुपपद्यते।

3. शुकस्यारब्धावसानाच्छक्तेश्च।

**44.आत्ममात्राधिकरणम्।**

4.आत्ममात्रो हि जीवन्मुक्तानुभवस्तद्दर्शनात्।

5.क्रमविवक्षोपपत्तेः।

6. क्रमान्तरस्योत्तरे।

7. चतुष्षष्टिमात्रात्मानुभवव्यपदेशात्।

45.प्रतीत्यधिकरणम्।

8. प्रतीतिस्त्वन्यविषया प्रकरणान्तरत्वात्।

9. विज्ञातब्रह्मविषयत्वादापरोक्ष्यापत्तेः।

10. ब्रह्मवरिष्ठ इति चेन्न प्राणचलनाद्यनुपपत्तेः।

11. सम्यग्ज्ञानिपरं तु रज्जुसर्पदृष्टान्तदर्शनात्।

12. जडसमाधानार्थत्वाज्जगत्प्रतिभानव्यवहृतेः।

13. मायाकार्यत्वान्न समष्टेरिति चेन्न मौढ्यप्रसंगात्।

46.चित्तशुद्ध्यधिकरणम्।

14.चित्तशुद्ध्यर्थत्वात् त्रयाणां न तुर्यस्य तु श्रोतव्यतोपपद्यते।

15. भिन्नफलत्वादुत्तरोत्तरातिशयो हि व्याख्यातः।

16. साधनवच्च तन्नियमः।

47.प्राज्ञानुवादाधिकरणम्।

17. प्राज्ञानुवादस्य पारोक्ष्यान्नात्रोपयोगः।

18. उभयतन्त्रत्वान्मननस्य द्वितीयानुवादः।

19. ब्रह्मत्वेनाशेषप्रतिभानदर्शनात्।

48.ब्रह्मविदाचाराधिकरणम्

20.ब्रह्मविदाचारः पावन इति तच्छ्रुतेश्च।

21. मुक्तचतुष्टयपरत्वान्न सप्तसंख्योपपद्यते।

22. मायाक्लृप्तत्वाद् बन्धमोक्षयोरभावात्।

23. दर्शनात्।

24. युक्तेश्च।

'संपन्न'-षट्-चतुर्विंशतिः।

इति द्वितीयाध्यायस्य तृतीयः पादः।

## अथ द्वितीयाध्यायस्य चतुर्थः पादः।

**49.दर्शनपर्यवसानाधिकरणम्।**

1.ॐ दर्शनपर्यवसानत्वान्न यथेच्छाचारोऽवधूतश्रुतेः।

2.शृङ्गवालाग्रवत् संकोचसौक्ष्म्यार्थत्वान्मध्येऽधःस्थौल्यविस्तारसिद्धिः।

3. देहादिहीनास्तु तद्दर्शनात्।

**50.वर्णाश्रमाधिकरणम्।**

4. आत्मविहारो ह्यचलप्रतिष्ठत्वात्।

**51.अन्यार्थोपदेशाधिकरणम्।**

5.अन्यार्थः पारोक्ष्यात्।

6.पूर्वजन्मित्वोपपत्तेर्दर्शनात्।

7.सर्वोपेक्षा त्वाश्रमबलात्।

8.आगामिविषयत्वादकर्तृतायाः।

9. ध्यानोपेक्षा तु व्यवहारान्तराभावात्।

10. स्वाश्रमज्ञानाविरोधी तूपपद्यते।

**52.शुभाचाराधिकरणम्।**

11.शुभाचारदर्शनाच्चानुष्टुभाऽऽन्विष्टतत्त्वानाम्।

12. वरीयसोऽन्धत्वादिसंभवात्।

**53.मात्रासूचकाधिकरणम्।**

13.सूचयति ह्यष्टाविंशत्युत्तरमात्रा महादेवः।

14. जगदीशजीवाश्चैवम्।

**54.एकदेहबहुजीवाद्यधिकरणम्।**

15.सांख्यपक्षे ह्यनवस्थादोषप्रसंगः।

16. ऐक्यसाधनानि चैवं परिमितानि।

17. दशावसानत्वात् सर्वत्र वा[1]।

18. आदौ तु तुर्यश्रवणादीनि।

**55.बह्वाचार्याधिकरणम्।**

19.न गुरवश्च नानेति चेन्नैवमप्येकस्माच्च संभवात्।

20.बहुत्वेऽप्युत्तरोत्तरस्य प्राधान्यात्।

21.वर्णादिभेद इति चेन्न विद्योत्कर्षबलाद् विद्योत्कर्षबलात्।

'दर्शन'-सप्त- एकविंशतिः।

## इति द्वितीयाध्यायस्य चतुर्थः पादः।

## अथ तृतीयाध्यायस्य प्रथमः पादः।

**56.आस्तिक्योत्पादनाधिकरणम्।**

1.ॐ आस्तिक्योत्पादनार्थत्वादद्वैतोपदेशस्य।

2. भूतार्थत्वान्नोत्पत्त्यादिरिति चेन्न भव्यभविष्यत्वदर्शनात्।

3. अतन्त्रविकारत्वान्न सविशेषत्वादिदोषप्रसक्तिः।

**57.विवर्ताधिष्ठानाधिकरणम्।**

4.विवर्ताधिष्ठानस्य भविष्यत्वात्।

5. भूतोपदेशस्तु शब्दपरब्रह्मानपवादात्।

6. भूतपरश्चोत्तरोपदेशात्।

7. अविभागाच्च।

---

1.अत्र प्रान्तभागे(margin) 'सर्वशब्दस्य'इति टिप्पणीरूपेण लिखित्वा तदुद्धार-पूर्वकं पुनः ' सर्वत्र वा'इति इत्युल्लिखितं दृश्यते।

8. युक्तिहीनत्वाच्चाद्वैतवादस्य भाक्ततोपपद्यते।

58.जीवन्मुक्तावधूताधिकरणम्।

9.जीवन्मुक्तो ह्यवधूत उत्तरानुभूतिदर्शनात्।

10.गुरुस्मृतिसंभवात् स्वानुभूतिमताम्।

59.अमनस्काधिकरणम्।

11.अमनस्कत्वाच्छुद्धवासनस्य संतृप्तिः।

12. अरूपनाशापेक्षया तु पुनः प्रार्थनमुत्तराच्च।

13. उद्दिष्टार्थोपसंहारस्तद्दर्शनात्।

60.आवृत्त्यसूचकाधिकरणम्।

14.आवृत्तिसूचक इति चेन्न द्रष्टव्यादिरर्थान्तरविषयत्वात्।

15. आत्मैक इति चेन्न प्रत्ययभेदाद् दध्यादिवत्।

16. निश्शेषनिवृत्तयेऽभ्यास इति चेन्न विपर्ययान्निवृत्तेः।

17. विक्षेपमादाय तु समाधिविधानात्।

18. प्रत्ययान्यत्वादद्वैतसिद्धिरिति चेन्नात्मनः षोडशतमत्वात्।

19. गव्यानुवृत्तिवदिति चेदेवमप्यात्मगृहीतेः संज्ञामात्रत्वात्।

20. नानुवृत्तिर्नामान्तरत्वाच्च।

61.साधनदर्शनाधिकरणम्।

21. साध्योपदेशादेव तु मान्द्यप्रसङ्गः।

62.वामदेवाधिकरणम्।

22.अश्रुतदर्शित्वाद्वामदेवस्येति चेन्न जातिस्मरत्वादुपपद्यते।

23.तपोनिमित्ताधिकारस्तु जन्मान्तरत्वादविरोधः।

24. अवान्तरफलत्वान्न दर्शनाद्यपेक्षेति चेन्न समुच्चयार्थसिद्धेः।

25. मिश्रेच्छुत्वान्मध्यमस्य।

26. प्राणापानचलितत्वान्नासनसिद्धिरिति चेन्न मञ्चस्थवदचलत्वात्।

'आस्तिक्य'-सप्त-षड्विंशतिः।

इति तृतीयाध्यायस्य प्रथमः पादः।

## अथ तृतीयाध्यास्य द्वितीयः पादः

**63.वेद्यादिभेदाधिकरणम्।**

1.ॐ वेद्यादिभेदाद् विद्याभेदोऽनुपसंहारश्चोपपत्तेः।

2. न्यूनविद्येति चेन्न भाक्तेऽनन्तगुणत्वात्।

3. अध्यात्मविद्यासंवन्धाद् गायत्र्याश्च।

4. हार्दा च निर्गुणा तद्दर्शनात्।

**64.देवयानाधिकरणम्।**

5. देवयानस्तु निश्चितार्थाविशेषात्।

6. संचितक्षपणार्था गतिरुपपद्यते च ।

7. दृष्टश्रुतात्माभेदप्रसंग इति चेन्नावृत्तितारतम्योपपत्तेः।

8. देहभावं तु जैमिनिः संकल्पश्रुतेः।

**65.औडुलोम्यधिकरणम्।**

9. औडुलोमिस्त्वनावृत्तिहेतोः संपत्तिं दर्शयति हि।

10. ऐश्वर्यात्तत्रैव निष्पत्तिरिति चेन्नास्मादिति दर्शनात्।

11. उत्तमत्वं चास्मिन्नेव निरङ्कुशम्।

**66.षड्देहोत्थानाधिकरणम्।**

12. षड्भ्यश्चोत्थानसंभवात् प्रत्यक्षोपपत्तेश्च।

13. श्रवणमात्रेणेति चेत् तद् व्याख्यातम्।

**67.वागादिसंपत्त्यधिकरणम्।**

14. उत्थिता तु वागुत्तरत्र संपद्यते तदैक्यात्।

15. अन्तराळ उपन्यासन्तु बादरायणः।

16. तेजस्सु च समाना मुमुक्ष्वोस्तदापीतेश्च संसारः।

**68.ज्ञानाधिकार्यधिकरणम्।**

17. शूद्रसाम्यादनधिकार इति चेन्नोभयविषयत्वात्।

18. मनुष्यस्त्वाचार्यो मोचकप्रदत्वात् प्रत्यक्षत्वाच्च।

19. प्रसादयत्नाभ्यामिति चेन्न प्रतिबन्धोपपत्तेः।

20.जळूकावच्च हेयोपादेयत्वोपपत्तेः।

21.कृतज्ञतामात्रत्वादुत्तरत्र चैवं संभवात्।

22.देशिकानालोकनादिति चेदेवमपि त्रैविध्यादविरोधाच्च।

23.दर्शनदीक्षोपेक्षाप्रसंग इति चेन्न पूर्वतन्त्रत्वात्।

**69.साधनानपेक्षाधिकरणम्।**

24. साधनानपेक्षेति चेन्न पक्षस्यावृत्तिप्रतिषेधपरत्वात्।

25. त्यागेनेति चेन्नैकदेशत्वात्।

26. सर्वभावेऽपि त्वतिप्रसंगात्।

27. अवधानवदिति चेन्नागौणत्वात् प्रकरणस्य।

28. निर्वासनस्य चैवं ग्रहसंग्रहोपपत्तेः।

**'वेद्यादि' -सप्त- अष्टाविंशतिः।**

**इति तृतीयाध्यायस्य द्वितीयः पादः।**

# अथ तृतीयाध्यायस्य तृतीयः पादः।

**70.अशून्यवादाधिकरणम्।**

1. ॐ भेदे हि शून्यवादप्रसंग इति चेन्नान्यत्र भावादानर्थक्याच्च।

2. कार्ये तु रूढेः कारणेषु योगसंभवात्।

3. वनवदिति चेद् व्यष्ट्यधिष्ठितत्वाद् विभागो दर्शनाच्च।

4. जलतरङ्गादिवदिति चेन्न बिन्दुजलादिवदुपपत्तेः।

**71.सर्वमात्राधिकरणम् ।**

5. परा तुर्यमात्रैवेति चेन्न पुरुषाकारस्थूलान्तत्वात्।

6. वृत्तय इति चेन्नानात्मतापत्तेरविज्ञेयत्वप्रसंगः।

7. प्रवाहरूपत्वाच्च सोपानवत्।

8. सप्तभूमिकाश्च समुद्रवत्।

**72.नीहाराद्यधिकरणम्।**

9.नीहारादिवदिति चेन्नाखण्डरूपत्वात्।

10. स्वगतभेदप्रसंग इति चेदेवमपि विज्ञेयत्वाद् भेदसलोकवत्।

11. अनर्थनिवृत्तेर्नोत्पाद्यत्वादिदोषश्च।

12. भूतेतरत्वाच्च।

**73.व्याससूत्रसाराधिकरणम्।**

13.आवृत्त्यादीनि पुनर्व्याख्येयानि।

14. आत्मेति च न प्रतीके नोत्कर्षादङ्ग आसीनः।

15. ध्यानाचलत्वस्मरणाविशेषाद् दृष्टं च।

**74.व्यासोक्तकर्मक्षयाधिकरणम्।**

16.तदधिगम इतरस्यानारब्धकार्य इति बादरायणः।

17. अग्निहोत्रादि चातोऽन्यापीति।

18. यदेव भोगेनेत्युपसंहारात्।

**75.शङ्करभाष्यासामञ्जस्याधिकरणम्।**

19.पराभिध्यानाद्देहयोगाच्चेत्यत्रासामञ्जस्यात्।

20. अविद्यमानयोरभ्युपगमादसंभवाच्च।

21. सृष्टिप्रकरणत्वाच्च नारणिदृष्टान्तः।

22. अव्यक्तादेः स्वपरत्वात् साध्यसृष्टिः।

23. देहत्रययोगाद् वा।

**76.भाष्यान्तरासामञ्जस्याधिकरणम्।**

24.भाष्यान्तराणीति चेन्न त्रयाणामप्यसामञ्जस्यात्।

25. हेयांशपरवशत्वाच्च।

26. असर्वश्रुतयोऽतश्चोपेक्षा।

**'भेदे' सप्त-षड्विंशतिः।**

## इति तृतीयाध्यायस्य तृतीयः पादः ।

## अथ तृतीयाध्यायस्य चतुर्थः पादः।

**77.भोगमोक्षाधिकरणम्।**

1. ॐ बह्वृचा ह्यधिकारसिद्धिः ।

2. उभयगोचरत्वाच्च।

3. दर्शनाच्च तन्नियमः।

**78.योगाधिकरणम्।**

4. योगेन तु समाधिः।

5. नवचक्रविवेकश्च।

6. सिद्धिप्रदैवेति चेन्नाभिसन्धिभेदाच्च।

7. निर्गुणत्वाच्च सर्वेषाम्।

8. अध्यात्मसंबन्धाच्च पूर्ववत्।

**79.हिरण्यगर्भाद्यधिकरणम्।**

9.हिरण्यगर्भादीनां तु कार्यपर्यायत्वात्।

**80.अन्तर्याम्यधिकरणम्।**

10. अन्तर्यामिणौ हेयोपादेयत्वात्।

11. प्राणिमात्रत्वाच्च स्मृतेः।

12. तदन्यत्वेऽपि च द्वैविध्यात्।

13. सांख्यपक्ष इति चेन्न जीवस्यान्तवत्त्वाभ्युपगमात्।

**81.पुरुषदृष्ट्यधिकरणम्।**

14.सर्वत्र पुरुषदृष्टिरिति चेन्नाव्यक्तमात्रे तदुपपत्तेः।

15. बादरायणश्चैवमाह हि।

16. संशोधितमात्रासु च तथा।

17. अव्यक्तादीनि च जीवलिङ्गानि।

**82.अप्रतीत्याद्यधिकरणम्।**

18. अप्रतीतिपर्यन्तस्तु तयोर्बाधः।

19. साध्यशोधनार्थानीति चेन्न चतुष्टयविरोधात्।

20. नियमश्च सर्पवत्।

21. सूक्ष्मविमर्शेऽपि च जीवन्मुक्तेरनन्तरत्वात्।

**83.वरणद्वयाधिकरणम्।**

22. कार्तार्थ्यं तु वरणाभ्याम्।

23. सदश्ववच्च योगेन शब्दात्।

24. अयुक्तस्यावश्येन्द्रियत्वाच्च तद्दर्शनात्।

25. अभेदस्मृतेश्च।

**84.जीवब्रह्मभेदाधिकरणम्।**

26. प्रागुत्पत्तेरेव त्वभेद उभयोः।

27. ऐश्वर इति चेन्नाधिष्ठानैक्यात्।

28. ज्येष्ठस्तु जीवो रात्रिवच्च भोक्ता।

29. तत्कालानवधेस्तत्कालानवधेः।

'बाह्वृच'-अष्ट- एकोनत्रिंशत्।

**इति तृतीयाध्यायस्य चतुर्थः पादः।**

## अथ चतुर्थाध्यायस्य प्रथमः पादः।

**85.आश्रमान्तराधिकरणम्।**

1. ॐ आश्रमस्तु विवर्तोपयोगात्।

2. सर्पवच्च।

3. स्वावलम्बनत्वाच्च नेतरत्।

4. असंभवमिति चेन्न तद्दर्शनात्।

5. गौणेऽप्यनिर्मोक्षप्रसंगः।

6. अभिध्यानोपदेशाच्च।

**86.उमासहायाधिकरणम्।**

7. सहायत्वादीनां तु नैर्गुण्य उपपत्तेः।

8. धर्मित्वाच्च न गम्योऽतीतः।

9. सापेक्षत्वाच्च नोभयोरनवद्यता।

10. ज्ञानभेदेऽपि च नातीतत्वात्।

**87.आरब्धवैराग्याधिकरणम्।**

11.आरब्धवैराग्यात् साधकस्तु भिक्षुः।

12. त्यागेनैवामृतत्वात्।

13. अयाचितादि तु मुक्तचतुष्टयपरत्वात्।

14. चित्तशुध्यन्तत्वाच्च।

**88.त्रिदण्ड्यधिकरणम्।**

15. जीवितेतरत्वात्तु त्यक्तसंगस्त्रिदण्डी।

16. अकर्तुरपि तु प्रतीचोऽहङ्कृतिसंबन्धोपपत्तेः।

17. परामर्शेऽपि चान्यार्थत्वात्।

18. प्राज्ञानुवाददोषप्रसङ्ग इति चेन्नान्यत्र संभवात्।

19. शूकोपमितत्वेऽपि चाविरोधः।

**89.सत्संगाधिकरणम्।**

20.सत्संगतेस्त्वत्र मुख्यत्वात्।

21. ध्यानोपक्रमाच्च।

22. नित्ययुक्त इति चेन्नार्थान्तरत्वात्।

23. प्राक् प्रसिद्धत्वाद् योगोपपत्तिः।

**90.स्त्रीदूषणाधिकरणम्।**

24. अशोभनत्वमाह हि।

25. स्तनस्य च श्वास्वादितत्वात्।

26. पूर्णाग्नित्वं च विस्पष्टम्।
27. इन्धनत्वाद्यवगमाच्च।

**91.पुत्रदूषणाधिकरणम्।**

28. पुत्रो हि क्लेशकरः शब्दात्।
29. उत्क्रान्त्यभावाच्च।

**92.वित्तदूषणाधिकरणम्।**

30. निन्दितत्वान्न परार्थेऽपि यतेः।

**'आश्रम'-अष्टौ-त्रिंशत्।**

**इति चतुर्थाध्यायस्य प्रथमः पादः।**

**अथ चतुर्थाध्यायस्य द्वितीयः पादः।**

**93.समाध्यधिकरणम्।**

1. ॐ समाधिभिस्तु कालं नयेत्।
2. स्तब्धता च पूर्वेष्विति चेन्नाविशेषप्रसंगात्।
3. आवेशास्वादयोश्च भेदात्।
4. पादत्रयं च तच्छ्रुतेः।
5. मन्त्रवर्णे चैवं संभवात्।
6. उभयत्र नोपपन्नत्वात्।
7. त्र्यम्बकत्वाच्च।

**94.वृत्तित्रयाधिकरणम्।**

8. आद्यं तु वृत्तित्रयाविशेषात्।

---

1.ग्र.प्रतौ इङ्ग्लीष्भाषायां टिप्पणी -See *Bhāṣya*.

9.संशयस्तु पूर्वसामञ्जस्यात्।

10. रसश्च नातीतस्सप्रतियोगिकत्वात्।

11. स्वतः प्रियत्वादास्वाद्यते तु।

12. अतीतेऽप्युपचारोपपत्तेः।

13. भेदश्च शब्दात्।

14. विद्योपाधिकत्वाच्च।

**95.वश्यमायाधिकरणम्।**

'

15. चितितन्मात्रेण तु वश्यमायत्वात्।

16. भाक्तत्वात्।

17. बादरिपक्षे ह्यनावृत्तिः।

**96.दत्तवेतनाधिकरणम्।**

18. दत्तवेतनवत्त्वपारवश्यात्।

19. प्रदीपवदिति तु निर्गुणस्य संभवात्।

20. हठात्कार इति चेन्न दर्शयतो हि।

21. बलीयस्त्वाच्च श्रुतेः।

22. अनन्यत्वात्तु सार्ष्टेः।

**97.ज्ञानयोगाधिकरणम्।**

23. ज्ञानयोगस्तु नारदीयात्।

24. प्रसिद्धं हि भारते।

**98.अवस्थात्रयाधिकरणम्।**

25. अवस्थात्रयं तु मायित्वाच्छ्रु तेः।

26. विकारशक्तियोगादुपपद्यते हि।

27. अम्बुवच्च।

28. आकाशवदिति चेन्न सगुणत्वात्।

'समाधि'-षड्-अष्टाविंशतिः।

## इति चतुर्थाध्यायस्य द्वितीयः पादः।

## अथ चतुर्थाध्यायस्य तृतीयः पादः।

### 99.षोडशावस्थाधिकरणम्।

1. ॐ अवस्थाविशेषा हि वासिष्ठे।
2. परित्यागाच्च।
3. चिदाकाशत्वाच्च जाग्रत्सुप्तेः।
4. आभासचेष्टितैरन्या।
5. त्रिपुट्यभावाच्च।
6. विलयश्च धीवृत्तेः।
7. आनन्दानुभवो हि सप्तम्याम्।
8. समाप्तता ह्युत्तरात्।
9. बोधैकतावाप्तिश्च।
10. दशमे तु सप्तोपपत्तिः।

### 100.उपदेशाधिकरणम्।

11. उपदेशस्य संप्रदायार्थत्वात्।
12. प्रकरणत्वान्मान्द्यप्रसंग इति चेन्नानुभवान्तरत्वात्।
13. ज्ञानवृद्धपरत्वाच्च।
14. व्यासवन्नेति चेन्नाधिकारिकत्वात्।

101.मायात्वाधिकरणम्।

15.मायित्वं तु कामित्वादिवत्।

16.कार्येष्विति चेन्न शक्तिद्वैविध्यात्।

102.आकाशसाम्याधिकरणम्।

17.आकाशसाम्यासंभवात्।

103.पुरुषोपासनाधिकरणम्।

18.उपास्यस्तु पुरुषस्तद्दर्शनात्।

'अवस्था'-पञ्च-अष्टादश।

## इति चतुर्थाध्यायस्य तृतीयः पादः

## अथ चतुर्थाध्यायस्य चतुर्थः पादः।

104.वेदान्तव्यवस्थाधिकरणम्।

1.ॐ वेदान्तव्यवस्थां हि रामचन्द्रः।

2. उत्तरोत्तरफलाधिक्यदर्शनात्।

3. व्यतिरेकप्रसंग इति चेन्नाथर्वणत्वात्।

105.ऐकमुख्याधिकरणम्।

4. प्रतिज्ञाहानिरिति चेन्न भेदैकमुखत्वात्

5.एकवाक्यता तूभयलिङ्गविभागेऽपि वृत्तिप्रतियोग्यविभागात्1।

6. क्रमप्राधान्यादितरस्य सद्यः फलद्वयवत्त्वमस्य च हि।

106.नवप्रतिषेधाधिकरणम्।

7. अरूपाभिप्राया नवप्रतिषेधाः।

8. अर्थान्तराणि तु।

**107.अशक्तमुमुक्ष्वधिकरणम्।**

9.अशक्तयस्तु पुरुषं गुरुं वा।

10. ब्रह्मचर्याच्च।

**108.विदेहमुक्त्युपसंहाराधिकरणम्।**

11.इन्द्रियाणां मन इत्यादिदर्शनात्।

12. नोत्क्रान्तिस्तु तच्छ्रु तेः।

13. अदेहमुक्तिः शब्दाददेहमुक्तिः शब्दात्।

'वेदान्त'-पञ्च-त्रयोदश।

**इति चतुर्थाध्यायस्य चतुर्थः पादः।**

**अध्यायश्च समाप्तः।**



# गुरुशिष्यसंवादे समुद्धृतानां प्रमाणानां सूची

# संपादकीयटिप्पणीषु समुद्धृतानां प्रमाणानां सूची

## गुरुशिष्यसंवादोद्धृताः सिद्धान्ता वादाश्च

## गुरुशिष्यसंवादोद्धृता ग्रन्था ग्रन्थभागाश्च



## गुरुशिष्यसंवादोद्धृता ग्रन्थकारा वादिनश्च





## अनुभूतिमीमांसाभाष्योद्धृतभागे दृष्टानि प्रमाणवाक्यानि

प्रसादादेव जायते
(पराशरोपपुराणम् ORI ms.
हस्तप्रतिसंख्या B.914
पत्रसंख्या 64) १०७
यतो वा इमानि भूतानि जायन्ते
(तैत्तिरीयोपनिषत् 3.1) १०६
यतो वाचो निवर्तन्ते
(तैत्तिरीयोपनिषत् 2.4.5 ) १२०
यतो वाच (तैत्तिरीयोपनिषत् 2.4.5)
१३३
यावदधिकारमवस्थितिराधिकारिकाणाम्
(ब्रह्मसूत्रम् 3.3.32) ११७
विक्षेपो वा समाधिर्वा मनसः स्याद्
विकारिणः। नित्यानुभवरूपस्य को
मेऽस्यानुभवः पृथक्। धन्योऽहं
धन्योऽहं तृप्तेर्मे कोपमा भवे-
ल्लोके? धन्योऽहं धन्योऽहं
स्वस्याज्ञानं पलायितं क्वापि।
अहो ज्ञानमहो ज्ञानमहो सुख-
महो सुखम्। अहो पुण्यमहो
पुण्यमहो गुरुरहो गुरुः। ऐहिका-
मुष्मिकव्रातसिद्ध्यै मुक्त्यै च
सिद्धये। यद् यत् कृतं मया पूर्वं
तत् सर्वमधुना कृतम्।
(अवधूतोपनिषत् 21) १३३
विज्ञानकारणस्यास्य श्रवणस्य
द्विजोत्तम। प्राधान्यं मननादस्ति
निदिध्यासनतोऽपि च। उत्पत्त्या-
वन्तरङ्गं हि ज्ञानस्य श्रवणं बुध।
तटस्थमन्यव्यावृत्तं मननं चिन्तनं
तथा। (पराशरोपपुराणम्
ORI ms. हस्तप्रतिसंख्या
B.914 पत्रसंख्या 40b) १०९
विविक्तदेशे च सुखासनस्थः शुचिः
समग्रीवशिरःशरीरः। अत्याश्रम-
स्थः सकलेन्द्रियाणि निरुध्य
भक्त्या स्वगुरुं प्रणम्य।
हृत्पुण्डरीकं विरजं विशुद्धं
विचिन्त्य मध्ये विरजं विशोकम्।
अचिन्त्यमव्यक्तमनन्तरूपं शिवं
प्रशान्तममृतं ब्रह्मयोनिम्।
तदादिमध्यान्तविहीनमेकं
विभुञ्चिदानन्दमरूपमद्भुतम्।
उमासहायं परमेश्वरं प्रभुं
त्रिलोचनं नीलकण्ठं प्रशान्तम्।
ध्यात्वा मुनिर्गच्छति भूतयोनिं
समस्तसाक्षिं तमसः परस्तात्। स
ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः
परमः स्वराट्। स एव विष्णुः स
प्राणः स कालोऽग्निः स चन्द्रमाः।
स एव सर्वं यद् भूतं यच्च भव्यं
सनातनम्। ज्ञात्वा तं मृत्युमत्येति
नान्यः पन्था विमुक्तये
(कैवल्योपनिषत् 5 ) १२९
वेदान्तज्ञानविज्ञानसम्यग्ज्ञानादिना
मुनिः। तद्विष्णोः पदमक्षोभ्यं
याति चिन्मात्रमेव हि (?)१३१
शास्त्रनिर्णायकन्यायकलापं मुनि-
सत्तम। सूत्ररूपेण कुर्वन्ति शिवस्यै-
वाज्ञयैव तु (पराशरोपपुराणम्
बि.914 पत्रसंख्या 59) १०२
शास्त्रमापाततो भाति मुने बहुमुखं

नृणाम्। निरूपितं तु न्यायेन विभात्येकमुखं पुनः (पराशरोप-पुराणम् वि.914 पत्रसंख्या 59) १०२

शुको मुक्तो वामदेवोऽपि मुक्तस्ताभ्यां ताभ्यां विना मुक्तिभाजो न सन्ति। शुकमार्गं येऽनुसरन्ति धीराः सद्यो मुक्तास्ते भवन्तीह लोके। वामदेवं येऽनुसरन्ति नित्यं कृत्वा जनित्वा च पुनः पुनस्तत्। ते वै लोके क्रममुक्ता भवन्ति योगैः साङ्ख्यैः कर्मभिः सत्त्वयुक्तैः (वराहोपनिषत् 4.34) ११७

संपश्यन् ब्रह्म परमं याति नान्येन हेतुना(कैवल्योपनिषत् 10)१०५

स कस्मिन् प्रतिष्ठितः भ्रुवोर्घ्राणस्य च यस्सन्धिस्तत्र (जावालोपनिषत् 2.6) १११-११२

सत्यं ज्ञानमनन्तं (तैत्तिरीयोपनिषत् 2.1.1 ) १२२

सन्ध्ये सृष्टिराह हि (ब्रह्मसूत्रम् 3.2.1) १३६

समस्तसाक्षिं तमसः परस्तात् (कैवल्योपनिषत् 7) १३९

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि। संपश्यन् ब्रह्म परमं याति नान्येन हेतुना। आत्मान-मरणिं कृत्वा प्रणवं चोत्तरा-रणिम्। ध्याननिर्मथनाभ्यासात् पाशं दहति पण्डित (कैवल्योपनिषत् 10 ) १२८

सा तु साक्षात् परा विद्या (अन्नपूर्णोपनिषत् 1.16 ) १०८

सेयं देवता (छान्दोग्योपनिषत् 6.3) १३८

सोऽन्वेष्टव्यः स विजिज्ञासितव्य (छान्दोग्योपनिषत् 8.7.1)१०६

## कैवल्यसाधने दृष्टानि त्रीणि प्रमाणवाक्यानि

ब्रह्माकारमनोवृत्तिप्रवाहोऽहंकृतिं विना। संप्रज्ञातसमाधिः स्याद् ध्याना-भ्यासप्रकर्षतः (मुक्तिकोपनिषत् 2.56)

यथा निरिन्धनो वह्निः स्वयोनावुपशाम्यति । तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यति (मैत्रायण्युपनिषत् 6.34)

यथोपास्ते तथैव स्यात् (?)

## अनुभूतिमीमांसासूत्राणाम् अकारादिसूची।




10

## अनुभूतिमीमांसाधिकरणानाम् अकारादिसूची।

Guruśiṣyasaṁvāda is a work on Anubhavādvaita or practical non-dualism. It is authored by Appayaśivācārya, a staunch advocate of Upaniṣadic ideas in 18th century. The work is in the style of dialogue between Guru and Śiṣya . This form is very well known in śāstric literature of India. Anubhavādvaita is based on spiritual experiences as well as the verbal testimony, the author claims. The style of the work is very simple and free from unnecessary śāstric jargon. The author shows cleverness in analysis of Upaniṣadic sentences. The work is edited depending on the text of a manuscript preserved at ORI, Mysore. An introduction in both Saṁskṛta and English is given. Foot notes are provided wherever the necessity demands. Indices of quotations, works , theories, arguments and contenders are appended at the end of the work.

**Price : 180/-**

**Copies can be had of :**



**Prasaranga**
**University of Mysore**
**Manasagangothri, Mysore-570006**